*पापयुते जामित्रे सौम्यैरनवेक्षिते तु बलवद्भिः ।
कन्या न सेति वाच्या प्रश्ने समुदीरिते वक्त्रा ॥१५॥

भृगुशशिनोर्द्रेक्काणा जामित्रगताः शुभैस्तु संयुक्ताः ।
सौम्याः स्वभाग[1]युक्ताः कुर्युः[2] पत्नीगतां चिन्ताम्£ ॥१६॥

कुजवीक्षणयोगाभ्यामन्याश्रयजीविनशिलाकाराः ।
भृगुणा गृहपतिकर्षकगोपालश्रेष्ठिशाकटिकाः[3] ॥१७॥

---

उक्तप्रकारेणानूढात्वे निश्चिते सा कन्या सदोषा न वेति ज्ञानायाह—जामित्र पापग्रहयुतवीक्षिते बलयुतैः सौम्यैरदृष्टयुते या पूर्वोक्ता न सा कन्यकेति पृच्छकस्य वदेत् । तत्र प्रष्टारूढोदयगे तत्सप्तमगे वा राहौ चेत् कन्या नेति वदेत् । सप्तमदर्शनयुतग्रह-वशाद्विप्रादिः कन्यादूषको विज्ञायते ॥१५॥

अथोढात्वनिश्चयायाह—शुक्रचन्द्रयोर्द्रेक्काणाः जामित्रराशिगताः सौम्यग्रहयुक्ताः पत्नीगतां चिन्तां कुर्युः । यदि सप्तमगाः सौम्यग्रहाः शुभांशद्रेक्काणगता अपि पत्नीगतां चिन्तां कुर्वन्ति । मैथुनचिन्तां वा वदेत् ॥१६॥

एवं पुरुषत्वे निश्चिते तद्विशेषावगममन्याश्रयजीवनावगमार्थञ्चाह—उक्तलक्षणैः स्त्रीपुरुषान् ज्ञात्वा पश्चाद् ग्रहवीक्षणयुतिभ्यां तयोः प्रवृत्तिं वदेत् । कुजवीक्षणयुतिभ्या-मुदयराशेः पूर्वभागे उदिते चिन्तितपुरुषा अन्याश्रयजीविनो भवन्ति । अग्नौ धातून् दग्ध्वा [1]कर्मकरादिघटकारान्तं वदेत् । अपरभागे उदिते कुजयुतदृष्टे शिलाच्छेदजीविनः शिल्पिनः । शुक्रयुतवीक्षिते पञ्चवर्गषड्भागेषूदितेषु गृहपतिर्वणिक्प्रवृत्तिर्गृहस्थो वा ।

---

१ 'म्यस्वभा' ट, ठ, द, प. २ 'भावयु' ख, ग, ण. ३ 'कावटकाः' ख; 'शार्कटिकाः' ग; 'कापटिकाः' घ, च; 'काकटिकाः' झ,द, प; 'शाङ्कटिकाः' ठ.

---

1 'कर्मा(?)द्याघटकारान्तान्' ख, ग, छ, ज, झ, ञ.

---

* पद्यमिदं गपाठे नास्ति । £ 'न्ताम् । द्वादशोऽध्यायः' ट.

[1] पाषण्डिपुलिन्दाजीवकरङ्गचरकथकादयः सौम्ये ।
चन्द्रे गजपरिचारकविप्रा गणकाश्च मन्त्रिणो वैद्याः ॥१८॥

रविणा नृपचक्रधराः सेनापतिमन्त्रिपार्थिवा गुरुणा ।
सौरेण सार्थवाहा दूतास्त्वथ पाचकाश्च कार्पटिकाः[2] ॥१९॥

पुनः पश्चाद्भागोदिते कर्षको वा वैश्यो वा भवति । तस्माद् गोपालान् वदेत् । ततो विप्रश्रेष्ठिकान् वदेत् । 'लग्नखण्डो वणिक् शूद्रस्ततः शकटजीविनः' इति । लग्नं पञ्चधा विभज्य प्रथमे वणिक् । द्वितीये कृष्याजीविनः । तृतीये गोपालाः चतुर्थे [बन्धपटु ? पट्टबन्धः] श्रेष्ठवणिक् । चेट्टिपणिक्कर् इति भाषायाम् । पञ्चमे शकटाजीवः ॥१७॥

बुधयुतदृष्टे लग्ने आदौ षड्भागे पाषण्डिनः[1] । आश्रमभ्रष्टा इति । पुनः पुलिन्दाः । ततो नैष्ठिकाः ब्रह्मचारिणः । ततो रङ्गजीविनः । ततः कथकाः कथनजीविन इति । चन्द्रदृष्टयुते लग्ने बुधवत् षट्सु त्रिंशद्भागेषूदितेषु गजपरिचारकाः । ततो विप्राः ज्योतिषिकाः । पुनर्मन्त्रिजनो मन्त्रवादी वा । तस्माद्भैषज्यजीविन इति ॥१८॥

राश्यर्धहोरेऽसमराशिषु रविचन्द्रयोः । युग्मेषु विपरीतम् । चन्द्रहोरा उदिता सूर्ययुतदृष्टा चेत् क्षत्रियो ज्ञेयः । सूर्यहोरा चन्द्रयुतदृष्टा चेत् चक्रवर्ती पार्थिवः । चक्रयन्त्रेण जीवति [इति] केचित् । गुरुणा त्रिभिर्द्रेक्काणैः सेनापतिर्मन्त्रिणश्च पार्थिवाश्च ज्ञेयाः । सौरेण युतदृष्टे उदितराशिं चतुर्भागं कृत्वा वदेत्[2] । प्रथमभागोदिते सार्थवाहाः वणिजः । द्वितीये दूताः । तृतीये पाचकाः । चतुर्थे कार्पटिकाः, कर्पटधारिणः कर्पटविक्रयवन्तो वा इति । मन्दस्य केचिदेवं वदन्ति —प्रथमषड्भागे भृतकजीविनः । पश्चाद्दूताः । ततः सार्थवाहा वणिजश्शूद्राः । पश्चात्केवलशूद्राः । पश्चाद् व्याजकारिण इति ॥१९॥

१ 'पाषण्डपु' ख, घ, च, न. २ 'कार्पटिकाः' घ, ध, प.

1 'नः पुनस्तेलिङ्गाः पुळि' ख, ग, छ, ज, झ, ञ. 2 'त् । शनिदृष्टयुते चतुर्भागे सार्थवाहा वणिजः पथिकाः ग्रामाद् ग्रामान्तरं प्रापकाः । द्वि' क.

सौनिककुणिन्दपाणा[1] राजप्रेष्या निषादकैवर्ताः[*] ।
देवारिणैवमाद्याः[2] ग्रहवद् ग्राह्याणि भवनानि ॥२०॥
लग्नस्योक्तं फलमिदमिन्दुस्थानेऽपि दर्शनाद्वाच्यम् ।
अन्योन्यनिपातेष्वपि राशिष्वागन्तुकं[3] वाच्यम्* ॥२१॥

---

राहुदृष्टयुते पञ्चपञ्चभागेषु मांससूनकः । [कुविन्दाः] वस्त्रकारकाः । पुनः कुणिन्दाः, वनालया इत्यर्थः । पुनः पाणाः, चण्डाळा इत्यर्थः । ततो राजप्रेष्या अधमाः, द्वारपालाः । ततो वनचराधमा वेटाः । ततो मत्स्यजीविनः । यदि ग्रहदृष्टियुतिरहिते लग्ने स्वाम्युक्तान् वदेत् । यदि ग्रहयुक्तः त्रिंशांशकसमपुरुषविधिवद्वदेदिति । इहोक्तपुरुषं चोरचिन्तासु वदेत् ॥२०॥

इहोक्तलक्षणं चन्द्रस्थाने ग्रहयुतवीक्षिते लग्ने बलहीने चन्द्रस्थाने च बलहीनेऽतिबलयुतेन सम्पूर्णचन्द्रेणापि वर्तमानं वदेत् । तत्र लग्नेनैव यदा निश्चयो भवति तदा चन्द्रबलस्य विषयम् । यदोदयस्य निस्सन्देहस्तदोदयेनैव जलादिकथनम् । अन्यथा तु चन्द्रराशिमुदयं कृत्वा सर्वं वाच्यमित्युक्तं भवति । आरूढच्छत्रसन्निपातेऽन्यत्फलमागन्तुकतया चिन्तितव्यमित्यर्थः । छत्रराशिना भविष्यदर्थम्, आरूढेनातीतं वदेत् । उदयेन वर्तमानं वदेदिति । प्रश्ने उदयारूढच्छत्रचन्द्रस्थानकेन्द्रचन्द्राः पञ्चैते केन्द्रत्रिकोणगताश्चेत्प्रश्नफलं शुभं भवति । तेषामतिबले राशौ प्रश्नफलं भवति । बलसमे उदयारूढौ प्रधानावेकराशिगतौ शुभौ । द्वितीयद्वादशगावशुभौ । द्वितीयैकादशगौ शुभतरं फलम् ।

---

१ 'कुविन्दपा' ध. २ 'देवा' ख, ग, झ, ट, ठ, प, ब, र. ३ 'ष्वागन्तुकफलमूह्यम्' ख to ङ, च to झ, ट, ठ, ध, न, फ, ब, र.

---

* एतत्पद्यानन्तर 'इति कृष्णीयशास्त्रे जीवयोनिचिन्ताध्यायः पञ्चमः' इति गपाठे, 'इति कृष्णीयशास्त्रे जीवयोनिपञ्चमोऽध्यायः' इति ठपाठे, 'इति कृष्णीयशास्त्रे जीवयोनिः पञ्चमोऽध्यायः' इति दपाठे, 'इति कृष्णीये जीवयोनिचिन्ता पञ्चमोऽध्यायः' इति पपाठे च लिखितं दृश्यते ।

चन्द्रश्चतुष्पदस्थो द्रेक्काणो दण्डपाणिरथ लग्ने ।
रविरपि चतुष्पदे स्याच्चतुष्पदानां भवेच्चिन्ता ॥२२॥

होरा चतुष्पदा चेद् द्रेक्काणा जम्बुकाश्ववदनाः स्युः ।
चिन्ता चतुष्पदानामिन्द्राचार्ये[१] चतुष्पदगे ॥२३॥

पश्यन्ति चतुष्पदगा ग्रहास्त्रिकोणास्पदाश्चतुष्पदिनः ।
द्रेक्काणो भवति तथा[२] चतुष्पदानां तु सा चिन्ता ॥२४॥

स्थलजे तथाम्बुजे वा तिर्यग्राशौ ग्रहा यदा बलिनः ।
द्विपदे चतुष्पदे वा चिन्ता स्यात्तत्र तद्रूपा ॥२५॥

---

चतुर्थदशमगौ शुभम् । पञ्चमनवमौ च शुभौ । षष्ठाष्टमगौ न शुभौ । अन्योन्यसप्तमगौ शुभौ । उदयाद्वा उदयारूढाद्वा षष्ठाष्टमव्ययगताः छत्रचन्द्रस्थाना विघ्नं कुर्वन्ति बलयुताश्चेत् । दुर्बले दीर्घकालात् कृच्छ्रात् फलं भवतीति राशिफलम् ॥२१॥[1]

अथ चतुष्पदचिन्तामाह—चतुष्पाद्द्रेक्काणोदये वा हलयुगधारिद्रेक्काणोदये वा दण्डहस्तोदये वा शकटयुतद्रेक्काणोदये वा चतुष्पाद्ग्रहयुतदृष्टे चतुष्पदां चिन्ता वक्तव्या । उक्तद्रेक्काणोदये चतुष्पाद्राशिगतौ रविचन्द्रौ केन्द्रत्रिकोणगौ चेच्चतुष्पाच्चिन्ता भवेत् ॥२२॥

चतुष्पाद्राशौ लग्नगते द्रेक्काणो जम्बुकवदनोऽश्ववदनो वा भवेत् । चतुष्पाद्राशिगते जीवे केन्द्रत्रिकोणगते चतुष्पदानां चिन्ता वक्तव्या ॥२३॥

बलसंयुताश्चतुष्पाद्राशिगता ग्रहाः पश्यन्ति वा त्रिकोणगता वा चतुष्पाद्द्रेक्काणोदये चतुष्पाच्चिन्ता भवति ॥२४॥

तिर्यग्राशौ चतुष्पाद्राशौ बलयुतो ग्रहश्चेद् द्विपाद्ग्रहाः द्विपदराशौ द्विपदचिन्ता भवति ।

---

१ 'नां देवाचार्ये' ख. २ 'तदा' ख, ग.

---

1 'लम् ॥ इति कृष्णीयशास्त्रव्याख्यायां चतुरसुन्दर्याख्यायां जीवयोनिचिन्ताध्यायः पञ्चमः ।' ज.

द्विपदचतुष्पदविपदाः सङ्कुलपादाश्च चिन्तिता ज्ञेयाः ।
द्रेक्काणसदृशरूपा ग्रहरूपा वा बलं ज्ञात्वा ॥२६॥

भौमस्य धनुष्यश्वः सिंहे व्याघ्रस्त्वजाविकौ मेषे ।
एणो वृषभे सौरेर्गजर्क्षमहिषा महिष्यश्च ॥२७॥

---

चतुष्पाद्राशौ चतुष्पाच्चिन्ता भवति । कीटग्रहतिर्यग्राशौ कीटचिन्ता । जलराशौ जलजा भवन्ति । स्थलराशौ स्थलजा भवन्ति* । तिर्यक्छब्देन द्विपाद्व्यतिरिक्ताः अपदाः । तद्रूपा—जलतिर्यक्स्थलतिर्यग्जलद्विपाज्जलमनुष्यादि । सोऽपि तिर्यग्भेद एव । प्रसिद्ध-मनुष्यव्यतिरिक्तत्वात्तमःप्रचुरत्वाच्च ॥२५॥

सङ्कुल[पादाः] शतपदादयः । उक्तन्यायेन द्विपाच्चिन्तां चतुष्पाच्चिन्तां निरूप्य वदेत् । मीनमकरयोः स्थितयोः फणीन्द्रचन्द्रयोः मत्स्यादिपादरहितां चिन्तां वदेत् । कर्कटकवृश्चिकयोः स्थितानां चन्द्रशनिराहूणां दृष्ट्या सङ्कुलपादानां सरीसृपाणां चिन्ता ज्ञेया । कर्कटकवृश्चिकलूतादीनामित्यर्थः । सर्पाश्रितद्रेक्काणोदये राहौ केन्द्रगते वा सर्पचिन्ता वक्तव्या । तत्र शनिना व्यन्तरसर्पाः । कुजदृष्टयुते क्रूराः सविषाः । उक्तद्विपदादयो द्रेक्काणग्रहयोर्बलाधिक्यं चेत् कृष्णादितादृग्वर्णा इत्यर्थः । राशिग्रहवशाद् द्विपाद्वा चतुष्पाद्वा मत्स्यमकरसर्पादिर्विपाद्वा सङ्कुलपादा वा तेषामुदितद्रेक्काणरूपं वा ग्रहरूपं वा रक्तशुक्लवर्णादि वदेत् । बलयुतस्य वर्णमित्यर्थः । द्रेक्काणग्रहाणां बलसाम्ये मिश्रं वदेत् । तेऽपि सर्वे बलयुताश्चेद् बहूनां रूपम् । बहूनां द्विपदादीनां रूपं वदेदिति ॥२६॥

चतुष्पाद्विशेषोपायकथनार्थमाह—पूर्वोक्तचतुष्पाच्चिन्ता चतुर्षु चतुष्पाद्राशिष्वेवंविधा भवति—धनुषि स्थितस्य कुजस्य दृष्ट्या अश्वः । सिंहस्थितस्य व्याघ्रः । मेषस्थितस्याजाविकं भवति । वृषस्थितस्य एणो भवति । सौरेर्धनुःसिंहमेषवृषेषु क्रमाद् गजर्क्षमहिषा महिषीति वदेत् ॥२७॥

---

* प्रतिरूपके आदर्शग्रन्थेषु च इतः परं २७ तमपद्यव्याख्यावधिका व्याख्या भागशो मिश्रीकृत्य लिखिता ।

सर्वत्र चन्द्रतनये शाखामृगवानरादयो ज्ञेयाः ।

सवितुर्गजेन्द्रमृगपतिमृगपा[1] वृषभे तु रुरुकटमौ ॥२८॥

शुक्रस्य तुरगकुक्कुरगोगवयाः सम्भवन्ति चापादौ ।

जीवस्याश्वोष्ट्रखरा निशाकरो राशितुल्यफलदः[2] स्यात् ॥२९॥

मेषस्याजो धनुषः खरोष्ट्रतुरगा वृषस्य गोजातिः ।

मांसाशो[3] मृगसिंहे चान्योन्यसमागमेऽप्येवम् ॥३०॥

---

उक्तेषु धनुःसिंहमेषवृषभेषु बुधे स्थिते शाखामृगवानराः वृक्षनिवासिनः । शललशाखामृगवानराद्या ज्ञेयाश्चतुष्पदाः । सूर्यस्य धनुषि गजेन्द्रः । सिंहस्थितस्य सिंहः । मेषस्थितस्यापि सिंहः । वृषस्थितस्य सूर्यस्य रुरुः, स्त्रोकटमश्च ॥२८॥

चापस्थितस्य[1] शुक्रस्य तुरगी । सिंहस्थितस्य श्वा[2] । मेषस्थितस्य गौरुक्ता[3] । गवि स्थितस्य गवयः । गवयो गोसदृशः । निशाकरो राशितुल्यजातिः— धनुर्मीनस्थितस्य चन्द्रस्याश्वः । सिंहस्थितस्य चन्द्रस्य सिंहः । मेषगस्याजः । वृषगस्य वृषः । जीवस्य चापगतस्याश्वः । सिंहगतस्योष्ट्रः । मेषगस्यानर ऋजूखरः । वृषगस्य साक्षादारोहखरः ॥२९॥

चापसिंहमेषवृषमकराणां मेषराशिः छत्रश्चेत् अजरुरुचमरचमूरवश्चोक्ताः । चापः छत्रगतश्चेदुदयवशात् खरोष्ट्रतुरगान् वदेत् । वृषे छत्रगते गोवृषगवयादीन् वदेत् । मृगे वा सिंहे वा छत्रगते मांसभक्षकान् वदेन्मृगान् । अन्योन्यसमागमेऽपि । उक्तराशीनामुपरिगते इत्यर्थः । यदि मेषे मेषगतश्चेदजमेव वदेत् । एवमन्येऽपि । केचिदेवं वदन्ति—उक्तराशीनामन्यतमो लग्नगतः, अन्यः छत्रगतः तदन्योन्यसमागमः ॥३०॥

---

१ 'मृगराजा वा रुरुः क्रमशः' ख. २ 'लदायो' ख. ३ 'मांसिमृगसिं' ख, ग, ङ.

---

1 'चापादिस्थि' ख, ज. 2 'रङ्गो' ख, ज. 3 'तस्याश्वा' ख, ज.

एतेषामुपरि गते मीने तुरगोऽष्टमे त्वजादि स्यात्[1] ।
एणो मकरे[2] नकुलः कुळीरके मानुषेषु तज्जातिः ॥३१॥

होरेन्द्वर्का नरराशिगताः सौम्येषु दुर्बलस्थेषु ।
कुर्वन्ति जन्म बलिनश्चतुष्पदानां विभागेन ॥३२॥

अस्मिन् योगे शशिनि स्वक्षेत्रगते खरोष्ट्रमहिषाणाम् ।
सौम्ये खरस्य सूर्ये वानरमार्जारनकुलानाम् ॥३३॥

अश्वस्य गुरौ भौमेऽजाविकमृगमर्कजे[3] मृगशुनोश्च ।
पशुजन्म भृगौ वाच्यं स्वक्षस्थेषु ग्रहेषूक्तम्[4] ॥३४॥

---

एतेषां चतुष्पाद्राशीनां छत्रगते मीने यदि तुरगः । वृश्चिके छत्रे अजाविकादीन् वदेत् । मकरे छत्रगते एणो भवति । कुळीरे कच्छपः । यदि मनुष्यराशिः छत्रगतश्चेन्मनुष्यश्चिन्तितः ॥३१॥

प्रकारान्तरेण चतुष्पाच्चिन्ता कथ्यते—होरेन्द्वर्कास्त्रयश्च नरराशिगता बलिनश्चेत् शुभेषु दुर्बलेषु, चतुष्पाज्जन्म कुर्वन्ति । चतुष्पाच्चिन्तां वा विभागेन वदेदिति ॥३२॥

विभागज्ञानमुच्यते—अस्मिन् योगे 'होरेन्द्वर्का' इत्युक्तलक्षणमस्ति चेत् जातान् चतुष्पदान् पृच्छकस्य वदेत् । स्वक्षेत्रगते शशिनि द्रेक्काणवशात् केन्द्रत्रिकोणगे खरोष्ट्रमहिषाणां जन्म वदेत् । सौम्ये स्वक्षेत्रगते केन्द्रत्रिकोणगे खरान् त्रिविधान् वदेत् । एते मृगा ऊर्ध्वमुखा ऊर्ध्वमुख्युदये शृङ्गिणः । तिर्यङ्मुख्युदये दंष्ट्रिणः । अधोमुख्युदये खुरिणः । सूर्ये स्वक्षेत्रगते द्रेक्काणवशाद् वानरमार्जारनकुलानां जन्म वदेत् ३३॥

गुरौ स्वक्षेत्रगतेऽश्वप्रसूतिं वदेत् । भौमे स्वक्षेत्रगते उदितद्रेक्काणवशादजाविक-

---

१ 'जादिः स्या' ख, ध. २ 'रे द्रोणिः कु' ख. ३ 'जे च मृगजन्म ।' ख.
४ 'म् । जीवयोनिः' छ, भ, म; 'म् । जीवयोनिस्त्रयोदशोऽध्यायः' ट; 'म् । जं वय निनंव' ब; 'म् । एवं जोवयं निः' र.

इति कृष्णीयशास्त्रे[1] एकादशो[2]ऽध्यायः[3]

---

## अथ द्वादशोऽध्यायः ।

भृग्वङ्गारकवर्गे योगे वा पारदारिकः प्रष्टा ।

भृगुबुधयोः[4] कन्यायां तथा पुनर्भूपतिश्चार्के ॥१॥

---

मृगांस्त्रीन् वदेत् । मन्दे सौम्यराश्युदये मृगप्रसूतिं वदेत् । क्रूरराश्युदये शुनो जन्म वदेत् । शुक्रे स्वक्षेत्रगते पशुजन्म वदेत् । सर्वेषु ग्रहेषु स्वक्षेत्रगतेषु सर्वेषां प्रसूतिं वदेत् । यत्र प्रस्तुतो राहुस्तत्र शनिवत् फलं वदेत्[1] ॥३४॥

[इति कृष्णीयव्याख्यायां चतुरसुन्दर्याम् एकादशोऽध्यायः ।]



---

तत्र प्रश्नकाले प्रश्नफलप्रत्ययार्थमेतानि लक्षणानि प्रष्टुर्वदेत् । तत्र भृगुकुजवर्गषट्क उदिते प्रष्टा पारदारिको भवति । एकराशिगतौ शुक्रकुजौ लग्ने वा सप्तमे वा एवं वदेत् । भृगुबुधयोर्वर्गोदये वा तयोर्योगे वा प्रष्टा कन्यादूषकः । तथा भृगुसूर्यवर्गोदये वा योगे वा पुनर्भूभर्ता भवति । अस्मिन् योगे स्वस्त्री क्षत्रियदूषणा वा भवति ॥१॥

---

१ 'इति जीवयोनिः' घ, ङ, च, ण, न, फ. २ 'ये दशमोऽध्यायः' झ ये चतुष्पाच्चिन्ता नाम षष्ठोऽध्यायः प. ३ 'स्त्रे दशमोऽध्यायः' क, ड, ढ; 'स्त्रे चतुष्पदां चिन्ताध्यायः षष्ठः' ग; 'स्त्रे चतुष्पाच्चिन्ता नाम षष्ठोऽध्यायः' ठ; 'स्त्र चतुष्पाच्चिन्ताध्या...नाम षष्ठोऽध्यायः' द; 'स्त्र चतुष्पाच्चिन्ताध्यायः सप्तमः' ध. ४ 'भृगौ पु' क, to ग, ङ, छ, ज, ट to ण, द to ब, र.

---

1 'त् । इति कृष्णीयशास्त्रव्याख्यायां चतुरसुन्दर्याख्यायां चतुष्पाच्चिन्ताध्यायः षष्ठः' ज.

नार्याश्रयात् समृद्धो दुर्बलचक्षुर्भृगोर्दिनकृतश्च ।
भृगुचन्द्रमसोराढ्यः कलहप्रायो[1] भवेत् प्रष्टा ॥२॥

अन्याक्रान्तस्त्रीको यमशशिनोराढ्य इन्दुगुरुवर्गे ।
बुधशशिवर्गे[2] धन्यः शशिकुजयोर्मातृहीनः[3] स्यात् ॥३॥

क्रूरारक्षकमल्लाः कुजवर्गे सौरसौम्यगुरुयोगे ।
सौरेन्दुजयोर्योगे स्यादानृतिको नरो ज्ञेयः ॥४॥

शुक्रसूर्यवर्गोदये वा योगे वा नार्याश्रयात् समृद्धसम्पद्युतः प्रष्टा भवेत् । नेत्रवैकल्यं च स्वस्य वा स्त्रिया वा वदेत् । शशिशुक्रयोर्वर्गे योगे वा आढ्यो भवति । स्त्रीकलहप्रियश्च । अन्येन ग्रहेणापि शुक्रचन्द्रयोर्यदुक्तं तत्प्रष्टुर्वा तस्य पत्न्या वा वदेत् ॥२॥

अन्याक्रान्तस्त्रीकः यमशशिवर्गे योगे वा प्रष्टुर्वा तस्य पत्न्या वा वदेत् । स्वस्त्री अन्याक्रान्ता भवति । चन्द्रगुरुवर्गे वा योगे वा आढ्यो भवति । तस्य माता च सुशीला द्रव्ययुता भवति । बुधशशिवर्गे योगे वा धनवान् भवति । शशिकुजयोर्वर्गे योगे वा क्षीणचन्द्रश्चेन्मातृहीनः प्रष्टा । बलयुते रोगयुतः ॥३॥

कुजमन्दयोर्वर्गोदये अतिक्रूरः । कुजबुधयोर्वर्गोदये रक्षापुरुषः प्रष्टा । कुजगुरुवर्गोदये मल्लः । सौरबुधयोर्वर्गोदये अनृतवादी । अथ उक्तग्रहौ एकराशौ लग्ने सप्तमगौ वा एवमेव वदेत् । ययोर्वर्गौ नोक्तौ तयोरपि निरूप्य वदेदूहात् । सूर्यकुजयोर्वर्गोदये वा योगे वा पितृहीनः । गुरुरवियोगे नवमराशिस्थिते पिता सम्पन्नः । गुरुशुक्रवर्गोदये तौ लग्ने[1] तत्सप्तमे वा एकराशिगतौ चेद् भार्या साध्वाचारा । शनिचन्द्रयोगे

१ 'हप्रियो' छ, ज. २ 'भृगुश' ठ, प. ३ 'योर्भ्रातृ' ण.

1 'तौलिलग्ने' ग, छ, झ, ज.

[1]आरण्ये चरवर्गे पक्षी शृङ्गी खुरी तथा चर्मी ।
भृगुबुधवर्गे योगे पक्षी यदि तौ निरीक्षेते ॥५॥

होराद्रेक्काणगृहत्रिंशद्द्वादशनवांशका वर्गाः ।
शुभबुद्धिजराप्रभवा गुरुबुधसौरा यथासंख्यम् ॥६॥

---

माता दुष्टाचारा । शनिशुक्रयोगे भार्या दुश्शीला । चन्द्ररविवर्गोदये योगे वा पितृमातृजनपूज्य इत्येवमूह्यम् । प्रष्टारूढराशौ वा तत्सप्तमे वा उच्चगतो ग्रहस्तिष्ठति चेत् तस्य ग्रहस्योक्तं द्रव्यं सर्वं प्रष्टुरस्तीति वदेत् । शत्रुनीचराशिगतश्चेत्तस्य तस्य नाशं वदेत् । सौम्यग्रहे प्रष्टारूढकेन्द्रगते बलयुते तस्य ग्रहस्य उक्तद्रव्यलाभं पृच्छति चेत् तस्यापि लाभं शुभत्वं च वदेदित्युपदेशः । एतन्ममाचार्योक्तम् । षष्ठाष्टमव्ययगतस्य ग्रहस्य यद् द्रव्यमुक्तं तन्न लभ्यते । लाभस्थानगतो लाभाय भवति ॥४॥

आरण्यराशौ चरवर्गोदये पक्षिणां च शृङ्गखुरचर्मग्राह्याणां चतुष्पदानां च प्रसूतिचिन्तां प्रष्टुर्वदेदिति । उक्तराशिवर्गोदये वा बुधभृगुवर्गोदये वा योगे वा तयोर्योगदृष्टिभ्यां वा पक्षिचिन्ता वक्तव्या । दीर्घविषाणग्रहवर्गोदये तयोर्योगदृष्टौ वा [ऋ ? उ]क्षादीनां शृङ्गग्राह्याणां चिन्तां वदेत् । उक्तराशिवर्गोदये खुरग्रहदृष्टियुते सिंहादीनां खुरयुतानां चिन्ता ज्ञेया । तस्मिन् राशौ सूर्यभौमवर्गोदये तयोर्योगे दर्शने वा व्याघ्रादीनां चर्मग्राह्या [नां ? णां] भवतीति विमृश्य वदेत् । उद्यन्नक्षत्रप्रथमपादोदये पक्षी । द्वितीये पादोदये शृङ्गी । तृतीये खुरी । चतुर्थे चर्मी ॥५॥

कालहोरा च द्रेक्काणं च स्वगृहं च तृंशद्भागाश्च द्वादशांशकनवांशकाश्च वर्गाः । ग्रहस्यैते षड्वर्गाः । ते च सूर्यचन्द्रयो राश्यर्धहोरा भवति । शुभबुद्धिजराप्रभवा गुरुबुधसौरा यथासंख्यम्—उदयगतास्सर्वे गुरुवर्गाश्चेत् प्रष्टुः शुभं वदेत् । बुधवर्गोदये प्रष्टा प्रचुरबुद्धियुतः । शनिवर्गोदये व्ययश्च हानिश्च रोगश्च मरणञ्च भवति । जराप्रभवं प्रष्टुर्वदेत् । जराशब्दस्तु अशुभमात्रोपलक्षणार्थः । शनिवत् सूर्यकुजयोः । जीववत् पूर्वपक्षचन्द्रशुक्रयोः । अपरपक्षगतश्चन्द्रः शनिवद्भवति ॥६॥

---

१ 'आ.ण्यचरे वर्गे खगशृङ्गी' ख.

*मेषांशेऽज.वीनां गोमहिषाणां वृषांशके जन्म ।
मिथुनांशे स्त्रीपुंसामपरे मध्वम्बुचाराणाम् ॥७॥

१ २ ३
‡वृकसिंहवराहाणां रुरोश्च सिंहांशके परे नृयुगम् ।
गजजन्म तुलांशे स्यात् सरीसृपाणां ततः परतः ॥८॥

४
काकानां वा नवमे पाणा दशमांशके भवेद्दासाः ।
५ ६ ७
आधार्मिकचोरशुनां कुम्भे जलजीविनां चान्त्ये ॥९॥

अथ मेषादिराशिषु वर्गोत्तमोदयेषु येषां जन्म तानाह—उक्तयोगाभावे वा बलरहिते वा वर्गोत्तमांशोदये पृच्छति चेदेतान् जीवान् वदेत् । अथवा वर्गोत्तमरहितेनापि बलयुतेन राश्यंशेन वदेद्राशिना वा । मेषे वर्गोत्तमांशोदये अजानामवीनां च[1] जन्म वदेत् । वृषे वृषांशोदये पशुमहिषाणाम् । मिथुनांशे स्त्रीपुरुषयुग्मं वदेत् । अपरे कर्कटांशे मधुकराश्चाम्बुचराश्च प्राणिनः ॥७॥

सिंहे सिंहांशोदये वृकसिंहवानरवराहरुरुचमरीणां जन्म वदेत् । कन्यांशे नृयुगम् । तुलांशे गजस्य वृश्चिकांशे स्थलसरीसृपाणां जन्म वदेत् ॥८॥

चापांशे काकाद्याः पक्षिणः । मृगांशोदये पाणावरदासानां जन्म भवति । धर्महीनचोराणां शुनां च कुम्भांशे भवति । मीनांशे जलजीविनां पक्षिणां जन्म वदेत्

१ 'मृ सिं' क. २ 'हवानराणां रु' छ, ज, झ, ट. ३ 'के तथा षष्ठे' ग, ञ, द, ध, प; 'के ततो मिथुनम्' ट. ४ 'मे दशमांशगतौ तु जन्म दासानाम्' ख. ५ 'श्चाधार्मिकचोराणां कु' ख. ६ 'नाम्मीवे' ग, ञ, ठ, द, ध, प. ७ 'न्त्ये ॥ चतुर्दशोऽध्यायः ।' ट; 'न्त्ये ॥ वर्गोत्तमचिन्ता' ध; 'न्त्ये ॥ एतद्वर्गोत्तमांशफलम्' ब.

1 'आविकमृगाणां चिन्ता ज्ञेया । वृषे' क, ख, ग, ज, झ, ञ.

* पद्यद्वय (७, ८) वफपाठयोर्नास्ति । ‡ पद्यमिदं चपाठे नास्ति ।

इति कृष्णीयशास्त्रे[१] द्वादशोऽध्यायः[२] ।

अथ त्रयोदशोऽध्यायः ।

उरगैर्वेष्टितकाया द्रेक्काणा गृध्रकोलसदृशमुखाः ।
क्रूराः कुर्युर्मरणं निधने यदि चन्द्रमास्तिष्ठेत् ॥१॥

पृष्ठोदये विलग्ने क्रूरा लग्नास्तहिबुकदशमगताः[३] ।
निधने च शीतरश्मौ[४] म्रियते रोगार्दितः पुरुषः ॥२॥

इति । एवमेव नष्टमुष्टिचिन्तासु वदेत् । वर्गोत्तमांशराशिभिर्बलयुतैः पूर्वोक्तैर्मनुष्यचिन्तालक्षणैः मनुष्ययोनिनिश्चयं ज्ञात्वा पश्चात् स्त्रीपुरुषविकल्पं ततस्तयोः शुभाशुभरोगमरणानि वदेत् । अशुभधुरुधुरायोगे षष्ठाष्टमलग्नचतुर्थगतैः क्रूरैर्वा रोगं वदेत्[1] ॥९॥

[इति कृष्णीयव्याख्यायां चतुरसुन्दर्यां द्वादशोऽध्यायः ।]

जीवस्य जीवनमस्ति न वेति चिन्त्यते — सर्पवेष्टिताश्च द्रेक्काणाः गृध्रसूकरवानरगोमायुसदृशमुखाश्च द्रेक्काणाः दण्डपाशरज्जुधारिणश्च लग्नगताश्च क्रूरसहिताः दृष्टा वा क्षीणचन्द्रेऽष्टमगते द्रेक्काणाः पृच्छकस्य मरणं कुर्युः । अन्यकार्यार्थमन्यत् पृच्छतः प्रष्टुरपि मरणं कुर्युरित्यर्थः ॥१॥

पृष्ठोदयराश्युदये क्रूरग्रहाः समस्ताः केन्द्रगताः निधने शीतरश्मौ यदि रोगार्दितो म्रियते केन्द्रसौम्या न चेत् । तत्र प्रष्टा अन्यस्यायुः पृच्छति चेत् सर्वं तस्यैव वदेत् ॥२॥

१ 'ति वर्गोत्तमाचिन्ताध्यायस्समाप्तः' ग. २ 'स्त्रे वर्गोत्तमचिन्ताध्यायस्सप्तमः' ठ, द, प. ३ 'स्तसुखनिधनगताः' क, घ, च, ञ, ड, ढ, ण, प, फ, ब, र; 'स्तसुखखनिधनगताः' ख, ग, ठ, द, ध. ४ 'रश्मिर्म्रि' ख to घ, छ to ठ, द, न to ब, र.

1 'त् । इति कृष्णीयशास्त्रव्याख्यायां चतुरसुन्दर्यां......न्त'ध्यायस्समाप्तः' ज.

पश्यन्त्यशुभा यतिमे राशौ स्थित्वाथ[1] रोगसूत्रस्थम् ।

ततिमे दिवसे[2] व्याधिः सौम्यैः सुखमेधते रोगी ॥३॥

लग्नाच्चन्द्रो यतिमे राशौ ततिमे[3] दिने भवेद्रोगः ।

सौम्याः पश्यन्तीन्दुं यतिमे ततिमे सुखी[4] दिवसे ॥४॥

षष्ठाष्टमयोः क्रूर[5]स्तिष्ठत्य[6]वलोकतेऽथवा किरणैः ।

नोत्तिष्ठते स रोगो न रुजति च शुभेक्षणा[7]साभ्याम् ॥५॥

---

रोगयुतस्य रोगसूत्रकारणं क्रूरग्रहं लग्नगतं यस्मिन् काले यस्मिन् नक्षत्रे स्थित्वा अशुभाः पश्यन्ति तत्रातिक्रूरेण चन्द्रेण युते रोग आरभते । तं ग्रहं लग्नकेन्द्रगाः सौम्याः यस्मिन् राशौ स्थित्वा पश्यन्ति तत्र अतिशुभेन चन्द्रेण युते रोगशान्तिं वदेत् ॥३॥

उदितराशिनक्षत्रादारभ्य चन्द्रो यस्मिन् नक्षत्रे स्थितः क्रूरग्रहवीक्षितो युतो वा भवति तस्मिन् नक्षत्रे मरणं भवति । लग्नोदितनक्षत्रादारभ्य यस्मिन् नक्षत्रे स्थितश्चन्द्रः सौम्यदृष्टयुतो वा भवति तस्मिन् चन्द्रे स्थिते रोगी सुखी भवति ॥४॥

लग्नात् षष्ठाष्टमयोः क्रूरग्रहयुतवीक्षितयोः रोगार्तो नोत्तिष्ठते । तयोरेकत्र पापोऽन्यत्र सौम्यश्चेद्याप्यो रोगः । तत्र नवमराशौ शुभक्षेत्रे शुभदृष्टयु [तो ? ते] वा चिकित्सया रोगशान्तिर्भवति । अशुभे विपरीतम् । स्थिरराश्युदये रोगो न शाम्य[ते? ति]।

---

१ 'त्वा तु रो' ख. २ 'से मरणं सौ' क, ग, ञ, ठ, ड, ढ, ण, द, ध, प; 'से मृत्युस्सौ' ट. ३ 'मे भवेद्रा' ख, ठ, द. ४ 'खी भवति' ख. ५ 'रास्ति-ष्ठन्त्यव' क to ङ, छ to ण, न, प. ६ 'लोकयन्ति वा' क to ङ, छ to ण, द, ब, र. ७ 'णाद्याभ्याम्' ख.

१ २ ३
*पित्तेन कुजे सौम्ये वातेनाभ्यां तु सौरभास्करयोः ।
४
वातकफाभ्यां शेषेषूह्याः स्वाङ्गेषु धात्वाद्याः ॥६॥
५
मरणस्य हेतुरूह्यः स्वजातिभूतात्मयोनिभिश्चापि ।
६
क्रूरालयग्रहेषु तु विषाग्निशस्त्रैर्वदेन्मरणम् ॥७॥

---

चरे शान्तिर्भवति । उभये याप्यः । षष्ठाष्टमे शुभदृष्टयुते वा चिकित्सया रोगशान्तिर्भवति । अशुभे विपरीतम् । षष्ठाष्टमे शुभदृष्टयुते रोगो नास्ति ॥५॥

पित्तेन कुजे । उदयारूढे भौमदृष्टयुते वा पित्तविकाराद्रोगः सम्भवति । सौम्ये वातविकारात् । आभ्यां तु सौरे च वातविकारात् । सूर्ये पित्तविकारात् । शेषेषु चन्द्रगुरुशुक्रेषु क्रमाद्वातश्लेष्मविकाराद् इति । राहुः सौरवत् । तत्र क्षीणचन्द्रो राशिवशाद्रोगं ददाति । ग्रहवीक्षणरहिते ग्रहाणामुक्तं स्वेषां राशीनामपि वदेत् । तस्मादपि त्रिदोषकोपाद्धातुविकाराद् ग्रहस्थिताङ्गेषूदयराशिं शिरसि स्थाप्य (?) पूर्वोक्तलक्षणैः यस्मिन्नङ्गे ग्रहः स्थितस्तत्र रोगं वदेत् । बहुग्रहेषु वातपित्तश्लेष्मकेषु समबलेषु दृष्टेषु रोगः सन्निपातो भवति । सूर्यादिग्रहाणां पूर्वोक्तान् धातूनद्यापि वक्ष्ये — 'स्नाय्वस्थ्यसृक्त्वगथ शुक्लवसा समज्जा मन्दार्कचन्द्रबुधशुक्रसुरेड्यभौमाः ॥' सूर्यस्यास्थि । चन्द्रस्य रुधिरम् । कुजस्य मज्जा । बुधस्य त्वक् । जीवस्य वसा । शुक्रस्य शुक्लम् । शनेः स्नायुरिति सप्त धातवः शूलज्वरातिसारकुष्ठविद्रधिकाद्यान् रोगान् बुद्ध्या निरूप्य वदेत् ॥६॥

मरणस्य हेतुं कारणं निरूप्य वदेत् पृच्छकस्य स्वजातिभिः । मेषोदये बलयुते अजेन मरणम् । वृषोदये वृषेण इत्यादि द्वादश राशयो ज्ञेयाः । उदय ।श्यंशकेन 'अटवीक्षेत्रग्रामा' इत्याद्युक्तस्थाने दृष्टयुतग्रहेण पृथिव्यप्तेजोवाय्वाकाशेषु बलयुतग्रहस्थाने केन्द्रैः चङ्क्रमणासनशय्याः । बलयुतेन राशिना पुनरपि पञ्चभूतैः पृथिव्यादिभिर्मरणं

---

१ 'जेऽनिलतः सौ' ख. २ 'म्ये त भ्यां' ख. ३ 'सौरिभा' ख. ४ 'स्वाङ्गेषु' ग, घ, च, ज, ढ, फ. ५ 'ह्याः स्वजातिभिर्मेषवृषमुखैर्भवनैः' ख. ६ 'हेत्वपि वि' ख.

---

* पद्यमिदं ङपाठे नास्ति ।

*गतिरपि तेषां वाच्या ग्रहभवनांशैः सुरादिषु क्रमशः[1] ।
द्विपदचतुष्पदपक्षिसरीसृपजात्यादियोगेन ॥८॥[2]

वदेत् । तत्र उदयारूढच्छत्रराशिना वा तत्र स्थितेन ग्रहेण वा मरणभूमिभाजनाश्चिन्त्याः । यदि छत्रराशावत्युच्चगो ग्रहोऽस्ति चेद्देवगृहे क्षेत्रे वा मरणम् । उच्चगते राजसन्निधौ, नीचगते चण्डालसन्निधौ । बन्धुगृहे बन्धुजने, शत्रुगृहे शत्रुगृहे[1] । क्षेत्रगते ग्रहे च स्वगृहे मरणं वदेत् । यदि छत्रराशिरुदयाद् दूरराशिश्चेत् परदेशे । समीपे समीपम् । ऊर्ध्वमुखे मृत ऊर्ध्वमुखः । एवमन्ये । क्रूरालयग्रहेषु विषाग्निशस्त्रैर्वदेन्मरणम् । पापराशौ पापग्रहाः स्थितास्तैर्दृष्टे युते वा यथासम्भवं विषाग्निशस्त्रैर्मरणं वदेत् । सर्पेण वा अग्निव्यापत्त्या वा आयुधेन वा मरणं वदेत् । तत्र एकजिह्वायुधं सूर्यस्य । द्विजिह्वायुधं कुजस्य । त्रिजिह्वायुधं राहोः । मन्दस्य चतुर्जिह्वायुधम् ॥७॥

उदयगतो वा दृष्टो वा यो ग्रहः स उच्चगतश्चेद् देवसमीपे । नीचगतश्चण्डाळसमीपे । शत्रुगतो नरकस्थ इत्यादि । द्विपाद्राशिगतश्चेद् द्विपाद् भवति । चतुष्पद्राशिगतश्चेच्चतुष्पाद्भवति । पक्षिराशिद्रेक्काणगतश्चेत्पक्षी । सरीसृपराशिगतश्चेत्सरीसृपो भवति । ग्रहयुतवीक्षणरहितेन राशिनापि वदेत् । एवं निरूप्य पुनर्जन्म वदेत् । वर्गोत्तमांशोदये तेनैव वदेत् । ऊर्ध्वमुखोदये द्विपदादिजातिषु प्रथमः । अधोमुखेऽधमः । तिर्यङ्मुखे मध्यमः । बलयुतेन लग्नेन वा द्विपदादिप्रभवं वदेत् । इत्युक्तप्रकारं विमृश्य निश्चयाद्वदेत्[2] ॥८॥

---

१ 'शैः स्वराशिषु' क, ख, ङ, ड, ढ, ण. २ 'न ॥ इत्यायुश्चिन्ताध्यायोऽष्टमः' ग; 'न ॥ इति कृष्णीयशास्त्रे आयुर्निरूपणाध्यायोऽष्टमः' ठ; 'न ॥ इति कृष्णीये आयुर्निरूपणाध्यायोऽष्टमः' द; 'न ॥ आयुश्चिन्ता' ध.

---

1 'हे स्वगृहे क्षे' क; 'हे तद्गृहे क्षे' ख, ज. 2 'त् ॥ इति कृष्णीयव्याख्यायां चतुरसुन्दर्याख्यायाम् आयुश्चिन्ताध्यायोऽष्टमः ।' ज.

---

* चपाठे पद्यादस्मादनन्तरं पूर्वोत्तराध्यायगतानि कानिचित् पद्यानि व्युत्क्रमेण लिखितानि दृश्यन्ते । बरपाठयोः पद्यमिदं नास्ति ।

सौरद्रेक्काणे वा भुजङ्गपरिवेष्टितेऽथवा लग्ने ।
शशिसौराभ्यां दृष्टे बन्धनमिति वाच्यमादेशे ॥९॥

*पापक्षेत्रेषु यमे त्रिकोणचतुरश्रसप्तमेषु गते ।
क्रूरैर्निरीक्ष्यमाणे बन्धोऽस्तीत्यादिशेत् क्षिप्रम् ॥१०॥

£अचिरेण चरे मोक्षः स्थिरेऽपि मोक्षस्तु दीर्घकालेन ।
द्विशरीरगते सौरे मध्यमकालेन मोक्षः स्यात् ॥११॥

सर्पाग्निशस्त्रवन्तं द्रेक्काणं वीक्षते रविर्बलवान् ।
भौमो वा दशमगतो [1]विद्याद्भयमग्निसम्भूतम् ॥१२॥

---

सौरद्रेक्काणोदये वा निगळरज्जुहस्तेषु द्रेक्काणेषूदितेषु चन्द्रशनिदृष्टेषु पूर्वोक्तद्विपदादीनां बन्धनमस्तीति वदेत् ॥९॥

यदि पृच्छकेन आदेशे कृते सति पापक्षेत्रगतो मन्दः त्रिकोणचतुरश्रसप्तमानामेकत्र स्थितः क्रूरग्रहवीक्षितश्चेत् क्षिप्रं ब[न्धं ? न्धनं] कृतमिति वदेत् ॥१०॥

येन कालेन बन्धमोक्ष इति पृच्छति चेत् पूर्वोक्तस्थानलक्षणयुतो मन्दश्चरराशिगतश्चेद् एकमासेन बन्धमोक्षो भवति । उभयराशिगतेऽर्धसंवत्सरेण भवति । अथवा अशुभदृष्टयुते मन्दे रश्मिभिर्यावद्भिः सौरः पश्यति तावद्भिर्मासवर्षर्तुभिः पूर्वक्रमाद्वदेत् कालं बन्धमोक्षाय ॥११॥

सर्पधारिणं वा अग्निधारिणं वा शस्त्रधारिणं वा द्रेक्काणं दशमगतो रविर्वीक्षते प्रष्टुरग्निभयं भविष्यतीति वदेत् । भौमे दशमगतेऽप्येवं वदेत् । राहुर्लग्नसप्तमगतश्चेत् सर्पभयं, भौमे लग्नसप्तमगते शस्त्रभयं वदेदिति ॥१२॥

---

१ 'वा मध्याह्न वि' ख to झ, ट to ढ, द to ब, र.

---

* पद्यमिदं घचनफपाठेषु नास्ति । £ पद्यमिदं बपाठे नास्ति ।

मध्याह्नचतुर्थाभ्यां पूर्वार्धगताः शुभा विवृद्धिकराः ।

कुर्युः पापा हानिं सर्वे मध्याच्च्युता यवनाः[१] ।।१३।।

इति कृष्णीयशास्त्रे[२] त्रयोदशो[३]ऽध्यायः ।

---

## अथ चतुर्दशोऽध्यायः

चरराशौ तु विलग्ने द्रेक्काणे वा चरात्मकेऽभ्युदिते ।

मध्याच्च्युतो ग्रहो[४] वा प्रवासचिन्तां विजानीयात् ।।१।।

---

दशमराशेः द्वितीयहोरामारभ्य चतुर्थराशेः प्रथमहोरान्तं राशिषट्कं गताः शुभग्रहाः सर्वकार्येषु जयवृद्धिलाभकराः । अशुभा विपरीतं हानिं क्लेशं च कुर्युः । तत्र नवमराशिगतशुभाशुभग्रहवशात् लाभालाभं च वृद्धिक्षयं च वदेत् । नवमराशेरतीते ग्रहेऽतीतम् । तस्मिन्नेव पश्चाद् गमिष्यति चेद् ग्रहः पश्चादेव फलं वदेदिति यवना वदन्ति ।।१३।।

इति कृष्णीयव्याख्यायां चतुरसुन्दर्यां त्रयोदशोऽध्यायः ।

---

चरराशौ लग्नगते वा चरद्रेक्काणे वा[1] पक्षिद्रेक्काणे वा चरराश्यंशकोदये प्रष्टुः प्रवासचिन्ता वक्तव्या । अथवा मध्याच्च्युतो नवमराशिगतो ग्रहश्चरराशिगतश्चेत् प्रवासचिन्ता भवति । ग्रहोऽधिपतिः । अष्टमे सप्तमे वापि चरराशिगतो ग्रहश्चेत् प्रवासश्चिन्तितः ।।१।।

---

१ 'नाः ।। पञ्चदशोऽध्यायः' ट. २ 'ष्णीये एकादशोऽध्यायः' झ. ३ 'स्त्रे आयुर्निरूपणोऽध्यायोऽष्टमः' ठ. ४ 'ते ग्रहे वा' ख to ठ, द to ब, र.

---

1 'वा चरराश्यंश' ख.

निरुपद्रवः[1] प्रवासः शुभग्रहैर्वाञ्छितार्थसिद्धिकरः ।
त्रासभयपरिक्लेशाः पापैरुदयस्थितैर्वापि ॥२॥

प्राप्ते ग्रहेऽस्तराशि यदि पृच्छेत् प्रोषितागमं कश्चित् ।
जीवे चतुष्टयस्थे प्रोषितविनिवृत्तिरादेश्या ॥३॥

---

निरुपद्रव इत्यनेनापि प्रोषितस्य शुभाशुभमुच्यते । लग्नसप्तमाष्टमगतैः शुभग्रहैः प्रोषितस्य नीरोगत्वं च द्रव्यलाभं च वदेत् । पापग्रहैः त्रासं भयं क्लेशं च वक्तव्यम् । तत्र नवमराशौ शुभग्रहश्चेत् प्रवासकाले शुभम् । अष्टमे चेद् गन्तव्यदेशप्राप्तिकाले शुभम् । सप्तमे चेत् प्रत्युत्तरकाले शुभम् । स्वगृहं जिगमिषोः शुभम् । तत्रस्थाः शुभाः शत्रुराशिस्थाश्चेत् शत्रुसकाशादर्थसम्पत् । गुरुश्चेद् ब्राह्मणसकाशात् । शुक्रश्चेत् स्त्रीसकाशात् । चन्द्रश्चेद्राजमहिषीसकाशात् । बुधे वणिजः । एवमशुभश्चेदशुभः । आदित्यः स्थितश्चेद्राजनिमित्त उपद्रवः । कुजश्चेत् चोरनिमित्तः । सर्पशनिभ्यां व्याधित उपद्रवः । अस्मिन् प्रकरणे आरूढेन चिन्त्यः । केतूदयराशौ नवमाष्टमसप्तमस्थैरुदयराशिस्थितैश्च वक्तव्यः । नवमगते सूर्ये राजपुरुषसहायवान् भवति, आयातीति । अष्टमगते सूर्ये राज्ञा वा राजपुरुषैर्वा वारितः पथि तिष्ठति । सप्तमगते सूर्ये लग्नगते च क्षिप्रमायाति । प्रोषितभयं क्लेशञ्चापि वदेत् । सर्वं त्रिषु क्षीणचन्द्रश्चेद्राशिफलम् । सम्पूर्णे स्वोक्तम् । शनिराह्वोः प्रोषितस्य रोगं वदेत् । भौमे नवमगते वाणिज्यद्रव्यहानिं वदेत् । अष्टमगते पथि दुर्जनविरोधं चोरबाधां च वदेत् । लग्नसप्तमगते रोगं वदेत् । मसूरिकादीनीति ॥२॥

प्रष्टा प्रोषितस्यागमनं पृच्छति चेदेवं वदेत् । प्राप्ते ग्रहेऽस्तराशौ—प्रश्नकाले उदयराश्यधिपतिः सप्तमराशिगतश्चेत् प्रोषितागमनं वदेत् । अन्यो ग्रहः स्वोच्चस्वभवनत्रिकोणसप्तमगतश्चेदागमनं वदेत् । बलरहिते ग्रहे वार्ता श्रूयते । वक्री ग्रहः सप्तमगतश्चेत् प्रोषितस्य विनिवृत्तिर्भवति । बलयुते जीवे केन्द्रगते च आगमनं वदेत् । लग्नाधिपतौ वक्रगते आगमनम् ॥३॥

---

१ 'वप्र' ख, ङ, द.

ग्रहभवनात्मीयदिशोस्तदन्तराळे[1] कियन्ति चर्क्षाणि[2] ।
तावद्भिरेव दिवसैः पुनरागमनं प्रयातानाम् ॥४॥

शुक्रेन्दुजौ त्रिकोणे चन्द्रः केन्द्रे शुभेक्षिताः क्रूराः ।
मित्रक्षेत्रगता वा भवेयुरशुभेक्षणापेताः[3] ॥५॥

मेषूरणोदयौ द्वौ सौम्यग्रहवीक्षितौ यदि स्याताम् ।
भवति तदाप्यागमनं प्रोषितनॄणां कृतार्थानाम् ॥६॥

---

ग्रहदिशि वा राश्युक्तदिशि वा स्थितः प्रयातो भवति । लग्नस्थितनक्षत्रादारभ्य प्रश्नफलदग्रहस्थितनक्षत्रान्तराळे ऋक्षा यावत्संख्या भवन्ति स्थिरराशौ तावत्संख्यैर्दिवसैः यात्रानिवृत्त आयाति । उभयराशौ तैर्द्विगुणितैर्वदेत् । चरराशौ त्रिगुणितैः दिवसैः वदेत् । द्रेक्काणवशादिति केचिद्वदन्ति । प्रथमद्रेक्काण उक्तकालेन, द्वितीये द्विगुणितेन, तृतीये त्रिगुणितेन । तत्र यात्रानिवृत्तिः पूर्वोक्तैः कालज्ञानार्थलक्षणैः इहोक्तैश्च बलाबलं ज्ञात्वा वर्षं मासं च दिवसं च यात्राविनिवृत्तिं वदेत् । निवृत्तेरपि पथि पतदिवसान् ज्ञात्वा प्रष्टुर्वदेत् । अत्र नक्षत्राणां स्वरूपसङ्ख्यां केचिद्वदन्ति ॥४॥

अथ प्रोषितस्यागमनलक्षणमाह—शुक्रेन्दुजौ एकत्र वा मिथो वा त्रिकोणगतौ बलयुतश्चन्द्रः केन्द्रगतो भवति चेदागमनं भवेत् । तदेको योगः । चन्द्रे केन्द्रगते क्रूरग्रहाः सर्वे शुभग्रहवीक्षिता वा स्वोच्चमित्रगता वा तस्यागमनं भवेत् । दूरगतस्यापि सुखं च वदेत् ॥५॥

उक्तयोगाभावे लग्नदशमौ द्वौ सौम्यग्रहवीक्षितौ वा युतौ वा प्रोषितानामागमनं भवति कृतार्थानाम् । चिन्तितार्थकार्यं च साध्यं भवेत् । दशमगते क्रूरे कार्यनाशं वदेत् ॥६॥

---

१ 'यदशा त' ख. २ 'न्ति ऋक्षा' ख, घ, च, ठ, द, फ. ३ 'वा बहेयुरशु' ख, ग, ञ, ट, ध, प, ब, र.

हिबुकं ग्रहे प्रविष्टे गृहं प्रविष्टं प्रवासिनं विद्यात् ।
हिबुकास्तमयान्तरगे ग्रहे तु पथि वर्तते पुरुषः ॥७॥

षष्ठत्रिकोणयोर्वा[1] जामित्रे पापवीक्षिताः क्रूराः ।
पृष्ठोदये विलग्ने प्रोषितमरणं शुभादृष्टे ॥८॥

ग्रहो ग्रहेणाभिहतो यद्यस्तमुपगच्छति ।
सौम्यैरदृष्टस्तत्काले प्रोषितं मृतमादिशेत् ॥९॥

---

उदयारूढाधिपतिश्चतुर्थभवनगतश्चेत् प्रोषितं गृहं प्रविष्टं वदेत् । अन्यो वा स्वोच्चमित्रग्रहश्चतुर्थगतश्चेदेवं वदेत् । तदधिपतिर्वा चतुर्थसप्तमभवनयोरन्तरे स्थितश्चेत् चिन्तितः पुरुषः पथि वर्तमानो भवति । तत्र सप्तमराशिगे ग्रहे प्रवासदेशान्निवृत्तः । षष्ठगते पथि मध्ये स्थितः शीघ्रायातश्च । पञ्चमगते स्वराष्ट्रगतः । हिबुके गृहगत इति । ग्रहस्य शीघ्रा वा मन्दा वा मध्यमा वा गतीर्ज्ञात्वा तदनुरूपं प्रोषितस्य वदेद् गमनम् ॥७॥



षष्ठत्रिकोणयोः जामित्रे वा क्रूरवीक्षिताः पापास्तिष्ठन्ति चेत् पृष्ठोदयराशिलग्ने शुभवीक्षणरहिते सति प्रोषितस्य मरणं वदेत् । मृत इति वदेत् । मरणप्रदेशं पूर्ववद्वदेत् । चतुर्षु राशिषु स्थितैरतिक्रूरेण मरणस्थानं वदेत् । नवमे क्रूरे प्रोषितकाले मृतः । सप्तमे क्रूरे प्रोषितः स्वसिद्धान्तदेशं गत्वा मृतः । षष्ठस्थिते निवृत्तः पथि गतो मृतः । पञ्चमे स्वदेशासन्नगतो मृत इति ॥८॥

युद्धपराजितो ग्रहोऽस्तमयगतः सौम्यावीक्षितश्चेन्मरणं वदेत् । यस्मिन् दिने ग्रहः सप्तमगृहं प्रविष्टः तद्दिने मृत इति वदेत् ॥९॥

---

१ 'त्रे वारिवा' क, ख, ङ, छ, झ, ट, ड, ण, ब, र.

*जामित्रान्तर्गते पापे तथा शत्रुनिरीक्षिते ।

पृष्ठोदये विलग्ने च[1] बद्धो[£]ऽस्तीत्य[2]चिराद्वदेत् ॥१०॥

द्विपदचतुष्पदविहगाः स्थलाम्बुचराश्च[3] राशयः प्रोक्ताः ।

तेषां यादृक्षेण ग्रहो गतस्तादृगागच्छेत्[4] ॥११॥

इति[5] कृष्णीयशास्त्रे[6] चतुर्दशोऽध्यायः ।

जामित्रगते पापे शत्रुवीक्षिते पृष्ठोदये पापयुते लग्ने प्रोषितो बद्धो भवति । वीक्षितग्रहवशात्तस्य पूर्वोक्ता ये मनुष्याः तैः शत्रुभिर्बन्धः कृत इति वदेत् । शत्रुवीक्षणरहिते बन्धुगृहे वा भवने वा रोगं वदेत् ॥१०॥

पूर्वोक्तलक्षणैः प्रोषितागमनं निश्चयात् ज्ञात्वा लग्नाधिपतिर्वा अन्यो वा बलयुतो यो ग्रहः प्रोषितागमनकार [णो ? णं] भवति स ग्रहो यादृशे राश्यंशे स्थितः प्रोषितस्तादृशेनागच्छेत् । लग्ने बलयुते तेनैव वदेत् । द्विपदराशिगते ग्रहे पदातिः ससहाय आगच्छेत् । चतुष्पाद्राशिगते चतुष्पाद्रथमारुह्यागच्छेत् । स्थलराशिगते स्थलेनागच्छेत् । जलराशिगते जलेन नावा स्थित आगच्छेत् । शकटद्रेक्काणगतश्चेत् शकटेन वा रथेन वागच्छेत् । पक्षिद्रेक्काणराशिगते अश्वमारुह्यायात् । आकाशराशिगते शिबिकाद्यारुह्यायात् । यादृशेन ग्रहगतिर्वर्तते तादृशः प्रोषितोऽप्यागच्छेदिति[1] ।

"वृषाद्यो द्वन्द्वमध्यश्च कर्किसिंहादिमावपि ।

द्रेक्काणाः पक्षिणः प्रोक्ताः प्रवासेषु हिताहिते" ॥११॥

[इति कृष्णीयव्याख्यायां चतुरसुन्दर्यां चतुर्दशोऽध्यायः ।]

१ 'लग्नस्थे ब' क, ख, ङ, छ, ज, ट, ड, ढ, ण, न. २ 'स्तीति चिरा' ख; 'स्तीत्यादिशेच्चिरात्' ट. ३ 'चाराश्च रा' ख. ४ 'त् । प्रवासचिन्ताध्यायः ।' घ. ५ 'ति प्रवासचिन्ताध्यायो नवमः' ग. ६ 'स्त्रे प्रवासचिन्ता नवमोऽध्यायः' ठ; 'स्त्रे प्रवासचिन्ताध्यायो नवमः' द, प.

1 'ति । इति कृष्णीयशास्त्रव्याख्यायां चतुरसुन्दर्याख्यायां प्रवासचिन्ताध्यायो नवमः' ज.

*पद्यमिदं घचफपाठेषु नास्ति । £ बद्ध इति खपाठे एव । सर्वेष्वन्येषु पाठेषु बन्ध इति दृश्यते ।

## अथ पञ्चदशोऽध्यायः

दग्धं गृहमुर्वीजे नवं च भृगुजे तु चित्रकर्मयुतम् ।
चन्द्रे दृढं पुराणं बहुविधशिल्पान्वितं सौम्ये ॥१॥

जीवे चित्रविचित्रं काष्ठप्रायं रवौ विशीर्णं[1] च ।
[2]रविजे जीर्णविशीर्णं काष्ठप्रायं[3] गृहं वाच्यम् ॥२॥

भौमस्य पाकशालामन्ये पाठ्यं[4] गृहं वदन्ति गुरोः ।
सौम्यस्यालेख्यगृहं भानोरपि पाकशालेति ॥३॥

---

अथ प्रोषितगृहं वा भोजनमैथुनादिगृहं वा चोराहृतद्रव्यस्थितगृहं वा अन्यद्वा कीदृग्विशिष्टं गृहमिति प्रष्टा पृच्छति चेत् तद्गृहज्ञानार्थमाह—लग्ने वा सप्तमे वा स्थितेन ग्रहेण वदेत्। उर्वीजे दग्धं गृहम्। भृगुजे नवं चित्रकर्मयुतं च। चन्द्रे पुरातनं दृढं च। बुधे बहुविधचित्रयुतम् ॥१॥

गुरोः बृहच्चित्रेण विचित्रं गृहम्। सूर्यस्य गृहं काष्ठप्रधानं जीर्णं भवति। मन्दस्य पुराणं दीर्घाकारं काष्ठाढ्यमतिजीर्णं गृहमुक्तम् ॥२॥

पूर्वोक्तग्रहाणां प्रवृत्तिकरणमुच्यते—अन्ये आचार्या एवं वदन्ति। कुजस्य पाकशाला अग्निगृहं वा भवति। जीवस्य वेदशास्त्रपठितार्थनिर्मितशाला अग्निहोत्रशाला वा भवति। बुधस्यालेख्यगृहं क्रीडागृहं वा वदेत्। आलेख्यगृहं चित्रशाला। सूर्यस्य जलराशिगतस्य स्नानगृहम्। स्थलराशिगतस्याग्निशाला वा भवति। पथिकानां विश्रमार्थं निर्मितं गृहं वा इष्टकापाकशालां वा वदेत् ॥३॥

---

१ 'र्णं वा' ट. २ 'सौरे जो' ग, ठ, द, ध, प. ३ 'प्रायं तु वा वाच्यम्' ब.
४ 'पाठ्यालयं वा' ह.

इन्दोर्वेश्म तु दिव्यं दैत्यगुरोर्जीर्णमुच्यते वेश्म ।
गोशाला रविसूनो राहोर्वर्चोगृहं ब्रुवते ॥४॥

अळिकर्क्यजतौलिगवां यमगुरुभूसूनुशुक्रसूर्याणाम्[1] ।
झषयुगकन्याधनुषां स्वदिशि बुधगृहं विनिर्देश्यम्[2] ॥५॥

समवृत्तं मकरगृहं कुम्भधरस्यापि राहुवेश्म स्यात् ।
सिंहस्यालयमाहुः कोष्ठागारं[3] त्रिकालज्ञाः ॥६॥

---

चन्द्रस्य सबलस्य विप्रगृहं वा राजगृहं वा वदेत् । शुक्रस्यासञ्चारितं जीर्णगृहं वदेत् । मन्दस्य गोशाला वा शूद्रगृहं वा भवति । राहोर्वर्चालयं मलविसर्जनगृहं वा चण्डालगृहमिति । लग्नेन वा वीक्षणग्रहेण वा उक्तानि गृहाणि विप्रादीनां वर्णानां भवन्ति । उच्चगतग्रहस्य देवगृहं वा राजगृहं वा भवति । क्षेत्रगतस्य ग्रहस्य स्वजातिगृहम् । नीचगतस्याधमगृहम् । शत्रुगतस्य शत्रुगृहम् । मित्रगतस्य मित्रगृहमित्यादि ॥४॥

अथ वीक्षणग्रहाभावे च केवलराशिनोक्तिः । श्लोकद्वयेन राशीनां गृहमुच्यते— वृश्चिकस्य मन्दस्योक्तं गृहम् । कर्कटकस्य जीवस्योक्तं गृहम् । मेषस्य कुजस्योक्तं भवति । तुलायाः शुक्रस्योक्तं गृहम् । वृषभस्य सूर्योक्तं गृहमिति । मीनमिथुन-कन्याधनुषां चतुर्णां राशीनां बुधस्योक्तं गृहं भवति । राशीनां स्वदिशि गृहं वदेत् । ग्रहेण द्वारं वदेत् । ग्रहभवनाभ्यां गृहं तद्द्वारं च निरूप्य सम्बन्धं ज्ञात्वा वदेत् ।

---

१ 'वृश्चिककर्क्यजवृषभतुलानां यमभृगुकुजार्कभृगुगेहम् ।
झषमिथुनषष्ठधनुषां स्वदिशि बुधगृहं विनिर्देश्यम् ॥' ठ;
'अळिकर्क्यजवृषभतुलानां यमभृगुकुजार्कभृगुगेहम् ।
झषमिथुनषष्ठधनुषां स्वदिशि बुधगृहं विनिर्देश्यम् ॥' प.

२ 'स्वे दिशि वाच्यं बुधस्य गृहम्' क to छ, झ, ट, ड, ढ, ण, द, ध, न, फ, ब.

३ 'गोष्ठागारं' क, ख, ग, ज, झ, ड, ढ, ण, ध, ब.

यदि केन्द्रगताः सौम्या लग्नादेकादशेऽथवा नियतम् ।
कुर्युर्धनवद्गेहं द्वारं स्वस्यां दिशि प्रोक्तम् ॥७॥

यस्मिन् भागे सौम्यो गृहेषु तद् द्रव्यमादिशेत्तत्र ।[१]
यस्मिन् भागे पापस्तस्मिन् शल्यं विनिर्देश्यम्* ॥८॥

मकरस्य गृहं समवृत्तम् । कुम्भस्य राहोरुक्तं भवति । सिंहस्यालयं [गो ? को] ष्ठगारं भवति । एवमाहुरतीतानागतवर्तमानकालज्ञा इति ॥५, ६॥[1]

उक्तगृहेषु निधिधनधान्यादि अस्ति किं नु नास्ति किमिति प्रष्टा पृच्छति चेत्तदपि वदेत् । ग्रहोदयदृष्ट्यसम्भवे वा ग्रहे बलहीने वा राशेरुक्तं गृहं वदेत् । उदयकेन्द्रगताः सौम्यग्रहा धनधान्यवन्तं गेहं कुर्वन्ति । एकादशगता वापि । उदयादारूढाद्वा केन्द्रलाभेष्वेकत्र उच्चे सौम्यग्रहस्तिष्ठति चेत् पृच्छकस्य निधिरस्तीति वदेत् । नवमे शुभे निधिलाभो भवति । गृहस्य द्वारं ग्रहस्योक्तदिशि वक्तव्यम्[2] । तत्र केन्द्रलाभेषु पापग्रहाश्चेद् धान्यादिरहितं गृहं भवति ॥७॥

पूर्वोक्तगृहेषु यस्मिन् भागेऽतिबलयुतः शुभग्रहस्तिष्ठति तत्र स्थाने तस्य धातुचिन्तायामुक्तं द्रव्यं वदेत् । स्थिरचक्रराशिविधानेन यस्मिन् राशौ ग्रहः स्थितः तत्रैव द्रव्यं भवति । ग्रहदृष्टराशौ वा विमृश्य वदेत् । गृहादन्यत्र वा उदयराशिग्रहद्रेक्काणस्थाने निधिं वदेत् । उदयराशिना वा फलदग्रहभुक्तभागैर्वा निष्कादिसहस्रान्तं द्रव्यं वदेत् । राश्याद्युदये वा राश्यादौ ग्रहे स्थिते वा स्वल्पं द्रव्यं भवति । एवं बहुग्रहेषु सहस्रादधिकं द्रव्यमपि वदेत् । उक्तराशिषु[3] नीचशत्रुगतैः पापैः वल्मीकं च क्षुद्रं च सर्पादिसरीसृपाणि च पीडां च वदेत् ॥८॥

१ 'ग्र' ख, ज; 'ग्रहस्तु तत्रस्थमादिशेद् द्रव्यम्' ग, ठ, द, ध, प.

1 'ति । एवं लग्नेषु जातिषु एतद्गृहमाढ्यस्य वा दरिद्रस्य वेति ज्ञानार्थमाह— उक्तगृ' च. 2 'म् । दृष्टेर्न सम्भवे तद्ग्रहदिशि तदभावे उदयदिशि द्वारम् । बलवद्ग्रहदिशि वा द्वारं भवति । तत्र' च. 3 'उच्चरा' क, ग, ङ, च.

* एतदनन्तरं रपाठे 'शुक्रो मधुर॰ (अ १६ श्लो १) इत्यारभ्यते ।

आरण्येऽन्यगृहस्थे ग्रहे गृहं तस्य भवति परकीयम् ।
स्वभवनयुक्ते स्वगृहं पूर्वोक्तविशेषणैर्युक्तम् ॥९॥

शय्याकोशोपस्करविहारदेवालयाग्निजलनिलयाः ।
भृगुजीवयमबुधानां रविकुजशशिनां प्रदेशाः स्युः ॥१०॥

मित्रर्क्षगतैस्[1]सौम्यैर्दृष्टे यु[2]क्तेऽथवा विलग्ने तु ।
मैत्रीचिन्तां विद्यात् स्त्रीपुरुषसमागमं चापि ॥११॥

पूर्वोक्तानि गृहाणि स्वस्य किन्तु परस्य किन्तु इति पृच्छति चेत् तदपि लक्षणैर्विमृश्य वदेत् । आरण्यराशिगते ग्रहेऽन्यग्रहस्य राशिगते वा वीक्षणग्रहे तस्य परस्य गृहं वदेत् । स्वभवनयुते ग्रहे वा स्वभवनं लग्नं वीक्षते वा ग्रहे स्वगृहमेव । शत्रुगृहे स्थित्वा ग्रहो वीक्षते चेत् शत्रुगृहम् । मित्रगृहे मित्रगृहम् । नीचगृहस्थितश्चेदधमजातेर्गृहम् । उच्चे स्थित्वा वीक्षते चेद् देवगृहम् । बहुग्रहवीक्षिते लग्नेऽधिकबलेन वदेत् । अन्यैर्ग्रहैश्चिन्तितगृहस्य समीपस्थानि जलकान्तारदेवगृहोद्यानानि वदेत् । पूर्वोक्तविशेषणैर्युक्तमेतद् गृहलक्षणं नष्टचिन्तासु वदेत ॥९॥

आरूढदर्शनग्रहवशाद् यस्मिन् स्थाने स्थितं द्रव्यं चोरोऽप्याहरति तत् स्थानं ग्रहवशाद्वदेत् । शुक्रदृष्टे लग्ने शयने वा शय्यागृहे वा स्थितं द्रव्यम् । गुरुवीक्षिते कोशगृहं वा आकाशे बद्धं वा द्रव्यमिति । मन्ददृष्टे उपस्करपात्रविन्यासगृहस्थं वा जीर्णपात्रस्थितं द्रव्यं वा वदेत् । बुधस्य विहारदेशस्थं द्रव्यम् । सूर्यदृष्टे देवगृहस्थं वदेत् । चन्द्रदृष्टे जले वा जलगृहे वा स्थितं द्रव्यमिति । कुजदृष्टेऽग्निगृहे स्थितं द्रव्यमिति । अथ भूमेरधः स्थितं वा भवतीति सप्तमस्थग्रहवशान्नष्टद्रव्यस्थितस्थानं वदेत् । तदभावे सप्तमवीक्षणस्य ग्रहस्योक्तं स्थानं वदेत् । तस्याभावे उदयारूढछत्रराशिग्रहवशाद्वदेत् चोराहृतद्रव्यस्थानमिति । अत्र लग्ने बलहीने लग्नराशिमारूढमिति मत्वा लग्नोदितनवांशराशिं लग्नं मत्वा तयोः छत्रराशिर्ग्राह्यः । छत्रराशिना नष्टद्रव्यस्थितस्थानं वदेत् ॥१०॥

मित्रर्क्षगतैः सौम्यग्रहैः युतवीक्षिते लग्ने मैत्रीचिन्ता वक्तव्या । तत्र मित्रक्षेत्रगतो

१ 'वर्क्षेग' छ. २ 'युतै' ब.

हृदयं गृहं च हिबुके मध्याह्ने स्थानमानकोशाज्ञाः ।
आत्मार्थजीवितान्यपि लग्ने श्रेयश्च चिन्तायाम् ।।१२।।

---

ग्रहः सौम्यराशौ मित्रदृष्टश्चेदतिशुभा मैत्री चिरकालं तिष्ठति । पापराशावपि शुभमित्रवीक्षितश्चेत् शुभं भवति । पापराशिगतः क्रूरेण शत्रुणा दृष्टश्चेत् चिरं शत्रुर्भवति । मित्रक्लेशाय भवतीत्यर्थः । मित्रराशिगतः शत्रुवीक्षितश्चेत् पुनः शत्रुर्भवति मित्रम् । एवमेव विमृश्य वदेत् शत्रुचिन्ताम् । स्त्रीपुरुषसमागमं चापि—यदि विवाहप्रश्ने मित्रराशिगतः पुरुषग्रहः स्त्रीराशिस्थितश्चेत् स्त्रीनिमित्ताः सम्पदो भवन्ति । तयोः स्नेहश्चास्ति । सुहृदि पुरुषराशौ स्त्रीग्रहः स्थितश्चेत् पुरुषनिमित्ताः सम्पदः । अथोदितं पुरुषराशिं पुरुषग्रहं वा मित्रगतः स्त्रीग्रहः पश्यति चेत् सम्पदं वदेत् । पुरुषे स्त्री स्नेहिता । विपरीते पुरुषः स्नेहितः । शत्रुग्रहेण वा पापग्रहेण वा युक्तो वीक्षितश्चेत् तयोः शत्रुभावं च रोगं च वदेत् । तयोः स्त्रीपुरुषयोरधिकं च पुत्रलाभं च ब्रूयात् । एवं लग्नसप्तमाभ्यां स्त्रीपुरुषविकल्पकैर्ग्रहराशिद्रेक्काणांशकैः सम्भावितैरेव तयोः शुभाशुभं वदेत् । एतल्लक्षणमन्यस्मिन् विवाहेऽपि वदेत् । तत्राधिपतिदृष्टे युते स्त्रीग्रहोद[यः ? ये] पुरुषेण आहूता स्त्री । विपरीते विपरीतमिति । प्रश्ने उदयगतग्रहवशात् तद्ग्रहस्योक्तं भावं प्रष्टुः पूर्वं वदेत् । पश्चाच्चिन्तितप्रश्नफलं चाप्रमत्तो वक्ता ब्रूयात् ।।११।।

हृदयस्य शुभाशुभत्वं च गृहविशेषं च मित्राणि च तोयं च स्वप्नं च चतुर्थराशिना वदेत् । चतुर्थराशिं यः पश्यति तद्वशाद्वा चतुर्थः पापराशिश्चेद्वा पापग्रहयुतवीक्षितो वा स प्रष्टा पापबुद्धिः । सोऽपि स्थलराशिर्वा शुष्कग्रहयुतवीक्षितो वा घर्मकाले तोयं नास्तीति वदेत् । गृहस्यासुखवत्वं च मित्रत्वं च वदेत् । शुभग्रहैः सर्वेषां शुभं प्रवृद्धिं च वदेत् । मध्याह्ने उदयदशमेन शुभाशुभग्रहांशकतद्द्रष्टृग्रहवशाच्च राशिभिः प्रवृत्त्यर्थं देशं चाभिमानं प्रवृद्धिं मानं च निधिस्थितस्थानं च भण्डारस्थं द्रव्यं च आज्ञाशब्दं च उच्चनीचबन्धुशत्रुगतैर्ग्रहैरज्ञातस्य प्रष्टुर्वदेत् । दशमराशिबलाभावे अंशकेनेत्यर्थः । लग्नेन वदेत् । तद्यथा शरीरस्य सुखं च रोगं चार्थानर्थार्जितत्वं च आजीवनान्तमाहारप्रवृत्तिं च उदयेन वदेदित्यर्थः ।।१२।।

[1]हृतपतितनष्टजायाप्रवासपरिदेवनानि जामित्रे ।

मृतरोगगता चिन्ता कथाप्रवादाश्च[2] विज्ञेयाः ॥१३॥

इति कृष्णीयशास्त्रे[3] पञ्चदशो[4]ऽध्यायः ॥

---

बलाद्धृतं द्रव्यं च नष्टद्रव्यं च स्त्रियो वा पुरुषस्य वा पतितत्वं च भार्यायाः सम्पदसम्पच्च प्रवासदेशं च दुःखालापं विरोधं च सप्तमभवनेन शुभाशुभग्रहराशिवशाद्वदेत् । कथिताः कथाश्च रोगचिन्ता मृतचिन्ता प्रवादकृताः शब्दाः सप्तमेन वदेत् । यात्राकाले कथिताः कथाश्च दृष्टान् प्रा[णींश्च ? णिनश्च] पथि प्रतिरोधकान् द्विपदादींश्च लग्नाद्वा आरूढाद्वा सप्तमगतग्रहराशिवशात् सर्वं वदेत् । एवमुदयचतुष्टयगतैर्ग्रहवशाद् उक्तानि सर्वाणि वदेत् । येऽनुक्ता भावास्तेषां पूर्वोक्तानि लक्षणानि द्वितीयादिषु राशिषु ज्ञेयानि । पूर्वलब्धं द्रव्यं च कुटुम्बं च वाङ्माधुर्यं च भविष्यच्च सर्वं द्वितीयेन भावेन वदेत् । तृतीयेन भ्रातॄणां च प्रष्टुः पराक्रमं च लाभालाभं च प्रवासेन सह गतांश्च अनुचरांश्च ब्रूयात् । पञ्चमेन पुत्रांश्च प्रष्टुर्मनसि स्थितं यत्तदपि उदरे शुभं च रोगं च क्षुत्पिपासाश्च पञ्चमराशिना वा ग्रहवशाद्वा वदेत् । षष्ठेन रोगं शत्रुमित्रोदासीनांश्च क्षतं च वदेत् । अष्टमेनान्नपानादि आयुश्च छिद्रं च ब्रूयात् । नवमेन धर्मं चाधर्मं च अदृष्टफलं च पितृशुभाशुभं च । एकादशेन यल्लभ्यते तदपि सुखं च । द्वादशेन व्ययं च व्यपगमं च द्रव्यहानिं च ब्रूयात् ॥१३॥

[इति कृष्णीयव्याख्यायां चतुरसुन्दर्यां पञ्चदशोऽध्यायः ।]



---

१ 'तनष्टपतितजा' ख, ग, ज, झ, ट, ठ, द, ध, प. २ 'दास्तु' ख. ३ 'ये द्वादशोऽध्यायः' झ; 'ये दशमोऽध्यायः' ठ. ४ 'स्त्रे चतुर्दशोऽध्यायः' क, ड, छ, ण; 'स्त्रे दशमोऽध्यायः' ज, द; 'स्त्रे गृहचिन्ताध्यायो दशमः' प.

## अथ षोडशोऽध्यायः

शुक्रो मधुरस्निग्धश्चन्द्रः शीतोऽङ्गिरोबुधौ रूक्षौ ।
लवणकषायस्सूर्यः शनिरम्लकटुः[1] कुजस्तिक्तः ॥१॥

मधुरस्तीक्ष्ण[2]समेतस्तिक्तकषायाम्लकटुकलवणानि ।
गुरुसूर्यसौरबुधभृगुभौमेन्दूनां परे ब्रुवते ॥२॥

सौम्यग्रहस्य लग्ने सौम्यर्क्षे वाशितं भवति मृष्टम् ।
ओजेषु[3] रूक्षमन्नं द्रवं तु युग्मे जलचरे वा ॥३॥

भुक्तं सुशुष्कमुष्णं रविकुजयोरजलराशिसंयोगे ।
सजले व्यञ्जन[4]बहुळं तदेव शीतं यमासुरयोः ॥४॥

---

शुक्रस्य मधुरस्निग्धरसः । चन्द्रस्य शीतमधुररसः । गुरुबुधयो रूक्षमधुररसः । सूर्यस्य रूक्षकषायौ रसौ । शनैश्चरस्याम्लकटुकौ रसौ । कुजस्य तिक्तः ॥१॥

गुरोर्मधुररसः । सूर्यस्य तीक्ष्णमिश्रितास्सर्वे । मन्दस्य तिक्तः । बुधस्य कषायरसः । शुक्रस्याम्लः । भौमस्य कटुकः । चन्द्रस्य लवणः । एता(नि ? न्) षड्रसा (नि ? न्) केचिद् ब्रुवते ॥२॥

सौम्यग्रहस्योदये सौम्यराश्युदये वा मृष्टं भुक्तमिति वदेत् । पापग्रहोदये ओजराश्युदये रूक्षं स्नेहरहितं भुक्तं स्वल्पमिति । युग्मराश्युदये जलराश्युदये वा द्रवमन्नं भुक्तं, बहु भुक्तमिति वदेत् ॥३॥

रविकुजयोः स्थलराशिगतयोः लग्नसप्तमगतयोः सुशुष्कमुष्णमिति वदेद् भुक्तम् ।

---

१ 'सौरः कटुकः कु' क, ख, छ, ट, ब, र. २ 'वास्वि' ग, ङ, छ, ज, झ. ३ 'जेऽविरु' ख, ग, ङ, ठ, द, ध, प. ४ 'नवत्ततदेव' ख to च, झ, ठ, ड, द to ब, र.

१
*सद्रवमनुष्णमुशनश्शशिनोरुदकात्मकानि सम्पाते ।
युक्तव्यञ्जनमजले गुरुबुधयोराश्रयेण स्यात् ॥५॥

मृगपिशितमर्ककुजयोरिन्दोः कौळीरमात्स्यममरगुरोः ।
द्वैपाश्वमर्कसूनोर्माहिषवाराहमादेश्यम् ॥६॥

२
पाक्षिणमुडुपतिसूनोर्माहिषगव्ये भृगोस्समुद्दिष्टे£ ।
३
शाकं स्वयोनिमूलं स्वस्वामीयं वदेद्राशौ ॥७॥

---

जलराशिगतयोः शनिराह्वोः व्यञ्जनमेव भक्षितमिति वदेत् । तदेव शीतं भवति । स्थलराशिगतयोरुष्णशुष्कं भवति । असुरो राहुः ॥४॥

द्रवयुतमनुष्णं भुक्तं शुक्रस्य । शश्युदये ईक्षिते वा उदकात्मकानि भुक्तानि । अजले स्थितस्य युक्तव्यञ्जनम् । गुरुबुधयोः जलस्थलराशिवशाद् भुक्तं वदेत् ॥५॥

भोजनविषये मांसविशेषः कथ्यते—अर्ककुजयोर्लग्नसप्तमगतयोः मृगमांसम् । चन्द्रस्य कौळीरं वा मात्स्यं वा वदेत् चन्द्रस्थितद्रेक्काणवशात् । जीवस्य द्वैपाश्वं पिशितम् । शनेर्माहिषं वाराहं वा राशिद्रेक्काणवशाद्वदेत् । यो ग्रहो मांसविषयः स यस्मिन् द्रेक्काणे स्थितः तस्य द्रेक्काणस्याकृति[चाहः ? वा] हस्तगतं फलमामिषं वा सर्वं वदेत् ॥६॥

बुधस्य पक्षिमांसम् । शुक्रस्य माहिषं गव्यं वा वदेत् । उपदंशं शाकं वा मूलफलं वा यद्यदुक्तं ग्रहस्य मूलचिन्तायां तद्वदेत् । ग्रहस्योक्तं भावं स्वराशौ वदेत् ॥७॥

---

१ 'त्मकेन' ख. २ 'स्समादि' ख. ३ 'भवेद्रा' ख, झ.

---

* रपाठे पद्यमिदं नास्ति ।

£ रपाठे एतदनन्तरं 'उदक' (श्लो० ९) इत्याद्येवास्ति ।

‡जलजं जलात्मकेन ग्राम्यं ग्राम्यैररण्यमारण्यैः ।
पापैर्विलेपकं हि स्वधान्यजं भुक्तमथ सौम्यैः ॥८॥

उदकयवागूश्शशिनो[1] बुधेन सम्भारसंस्कृता सैव ।
घृतमिन्द्रगुरोस्तैलं शेषाश्शुक्रस्य नवनीतम् ॥९॥

आजं पयोऽजकुजयोर्माहिषमार्केर्गवां वृषोशनसोः ।
अन्येष्वाश्रयतुल्यं भवनेषु चतुष्पदेषूह्यम् ॥१०॥

---

जलराशिना वा जलग्रहेण वा भुक्तमन्नं व्यञ्जनं जलसम्भवमिति वदेत् । स्थलग्रहराशिभिः स्थलसम्भवम् । ग्राम्यग्रहराशिभिर्ग्राम्यम् । आरण्यैरारण्यम् । पापग्रहराशिभिर्निस्सारं भुक्तं लेपकरहितं भवति । अन्नरहितं भक्ष्यमेव वा । सौम्यग्रहैः स्वोक्तधान्यजमन्नं भुक्तमिति वदेत् । पूर्वं मूलचिन्तायां [यद्वक्ष्यति ? यदुक्तं] तद्धान्यमिह विमृश्य वदेत् ॥८॥

पुनरपि भोजनविशेषाः कथ्यन्ते—सप्तमगतेन ग्रहेण सेकं वदेत् । केवलजलयवागू चन्द्रस्य । कटुकादिसम्भारसंस्कृतयवागूं बुधस्य । गुरोर्घृतं गुळं च वदेत् । शुक्रस्य नवनीतम् । शेषाणां रविकुजशनीनां तैलं वदेत् ॥९॥

अनेनापि सेकविशेषः—सप्तमगतेनैव वदेत् । मेषे सप्तमगे कुजे वा आजं पयः सेकः । शनैश्चरदर्शने माहिषं पयः । वृषोदये शुक्रदर्शने वा गव्यम् । शेषाणां ग्रहाणां आश्रितचतुष्पात्पयः सेकः । तदूह्यं वक्तव्यम् । उदयकेन्द्रेषु चतुष्पात्सम्बन्धो न चेत् तदा चतुष्पात्सेको न वक्तव्यः ॥१०॥

---

१ 'गू श' ग, घ, च, छ, ज, ट, ध, न, फ, ब, र.

---

‡ इपाठे पद्यमिदं नास्ति ।

मांसव्यञ्जनमारेऽस्तमये सौम्यस्य पानकं हरितम् ।
१
व्यञ्जनबहुत्वमुशनाश्चित्रं कुरुते बुधोऽप्यत्र ॥११॥
२
सौरे परान्नमम्लं व्यञ्जनमथ मृतकदर्शनं वापि ।
३
कुरुते सकाष्ठशाकं भार्यालाभं च दिवसकरः ॥१२॥
४
क्रूरा अदन्ति पिशितं तृणमुशना द्वयमपीन्दुजो भुङ्क्ते ।
५
तृणधान्यं गुरुरिन्दुः कृमिमत्स्यौ जातिवद्राशिः ॥१३॥

---

कुजे सप्तमगे मांसं सेकद्रव्यम् । बुधे सप्तमस्थे हरितालवर्णयवाग्वादि सेकद्रव्यम् । अनेकव[र्णो ? र्णम]नेकं सेकद्रव्यं यूषादि शुक्रस्य । बुधस्य सुरादि वा वक्तव्यम् ॥११॥

सौरे सप्तमस्थे परान्नं भुक्तमिति वदेत् । पुराणमन्नं वा आम्लसेकद्रव्ययुक्तं भुक्तमिति वदेत् । पथि शवदर्शनं मृतकवार्तां वा मृतकथां वा प्रष्टुर्वदेत् । सरीसृपमांसं च वदेत् । सूर्ये सप्तमस्थे काष्ठशाकादिबहुळं भुक्तमिति वदेत् । स्त्रीलाभं च जातमिति वदेत् ॥१२॥

भोजनविधौ मांसव्यञ्जनके निश्चिते कस्य मृगस्य मांसमिति पृच्छति चेत् क्रूरदर्शने मांसादानां शार्दूलादीनां मांसमिति वदेत् । शुक्रदर्शने तृणादानां मांसमिति वदेत् । बुधदर्शने द्वयम् । सौम्यराशिस्थितस्य शुक्रवत् । क्रूरराशिगतस्य क्रूरवत् । गुरौ सप्तमस्थे तृणधान्यादानां मांसम् । चन्द्रे सप्तमस्थे कृमिमत्स्यादानाम् । सप्तमे ग्रहरहिते सप्तमराशिवशाद्वदेत् । राशिजातिमांसं वा तदशितस्य मांसं वा विमृश्य वदेत् ॥१३॥

---

१ 'बुधश्चात्र' ख, ब to ज, न, फ. २ 'नश्चापि' क to ग, च to झ, ट to ण, द to ब, र. ३ 'ते तु काष्ठगा' ख, ङ, छ, झ, ब, र. ४ 'रा आन्त्वं पि' घ, च, फ. ५ 'धान्ये' ग, झ, ट, द, ध, प.

*सहभोक्तृभुक्तिवेळाजात्याकृतयो व्यवस्थेयाः[1] ।

पूर्वोक्तभोजनानि[2] च वक्तव्यानि ग्रहैस्सततम्[3] ।।१४।।

इति[4] कृष्णीयशास्त्रे[5] षोडशोऽध्यायः ।।

---

उदयमारूढं वा ये ग्रहा वीक्षन्ते तैः सर्वं व्यवस्थेयाः । 'पितृमातृसहज' इत्यनेन सहभोक्तारो ज्ञेयाः । उक्तप्रकारेणान्नविशेषो ज्ञेयः । 'ग्रहगृहयोर्दिशमर्कः' अनेनाहनि रात्रौ वा भुक्तिकालो विज्ञेयः । 'विप्रौ भृगुदेवगुरू' अनेन भोजयितारश्च विज्ञेयाः । उदयराशिवशादाकृतिं च वदेत् । पूर्वोक्तभोजनविशेषान् ग्रहैरेव वदेत् । चकरे[णाचा? ण चै]भ्यो विज्ञाय वदेत् सततम् । उदयेनारूढेन वा भोक्तुः शरीराकृतिं च शुद्धिं च वदेत् । ग्राम्यराश्युदये ग्राम्यग्रहोदये वा ग्रामे भुक्तिरिति । तथा नागरग्रहान्नगरे । आरण्येनारण्यम् । जलेन जलम् । भूमिं तथा स्थलेन । उदयद्रेक्काणराशिस्वभावं चाकारं च वदेत् । उदये स्थिरे एकभुक्तिं वदेत् । चरेण बहुभुक्तिम् । उभयेन द्विभुक्तिमिति । एवं निरूप्य वदेत् । द्वितीयेनामत्रविशेषं वदेत् । चरे वृक्षपत्रम् । जलस्थलराशिग्रहवशाद् वृक्षप्रदेशो ज्ञेयः । स्थिरे च चषकादि वदेत् । तत्र ग्रहैः स्थानावकाशं पत्रविशेषं वदेत् । तृतीयेन राशिनाग्रहेण वा पूर्वोक्तफलमूलं भक्ष्यं वदेत् । चतुर्थेन भोजयितृजातिं वदेत् । पञ्चमराशिग्रहेण तद्वीक्षणाद्वा भोक्तुश्चिन्तितं वदेत् । भोजनकाले मानुषद्विपदपक्षिसरीसृपचिन्तां वा यद्यच्चिन्तासूक्तं तत्सर्वं विमृश्य वदेत् । षष्ठराशिस्थितग्रहवीक्षितैः सस्यमुपदंशं वदेत् । षड्रसश्चिन्तनीयः । सप्तमे घृतगुळसूपादिसेचनं स्त्रीसङ्गतिश्च विज्ञेयम् । अष्टमेन अन्नविशेषं च भोजनविघ्नं च वदेत् ।

---

१ 'ळापक्तिस्थानाकृतिव्यवस्थाश्च' ग, द, ध. २ 'सभाज' ख, ग, ङ, च to झ, ट, ठ, ढ, द to ब. ३ म् ।। इति भोजनविधिः । इति कृ' क, ड, ढ, ण; 'म् ।। भोजनविधिः समाप्ता' ङ; 'म् । भोजनविधिः' ध, न. ४ 'ति भोजनचिन्ताध्याय एकादशः' ग; 'ति भोजनविधिः' घ, च, फ, ब; 'ति भोजनविधिः समाप्तः' छ, भ, म; 'ति भोजनचिन्ताध्यायो एकादशः' द; 'ति कृष्णीये भोजनचिन्ताध्यायो एकादशः' प. ५ 'ये त्रयोदशोऽध्यायः' झ; 'ये भोजनचिन्ताध्याय एकादशः' ठ.

---

* पद्यमिदं रपाठे नास्ति ।

## अथ सप्तदशोऽध्यायः

*भयमर्को लग्नगतस्सौरो व्याधिं धरासुतो घातम् ।
मरणं वैकल्यं वा चन्द्रः कुरुते विलग्नस्थः ॥१॥

वस्त्रार्थयुवतिलाभं बृहस्पतिश्चन्द्रजस्तु राशिफलम् ।
अन्यस्त्रीसङ्गमनं वस्त्रोत्पत्तिं भृगुः कुरुते ॥२॥

मेषूरणे दिनेशः कुरुते स्थानार्थरोगभयचिन्ताम् ।
चन्द्रोऽर्थागमचिन्तामिष्टश्रवणाश्रयां कथां चैव ॥३॥

---

नवमवीक्षणग्रहैर्वा रश्मिसंख्यैः ये ग्रहाः पश्यन्ति तैर्वा सहभोक्तॄन् वदेत् । दशमेन भोक्तुर्भुक्तिपूर्तिमपूर्तिं वा वदेत् । कथमिति चेत् । ऊर्ध्वतिर्यगधोमुखिषु अप्रमध्यस्वल्पपूर्तिं क्रमेण वदेत् । अथवा सम्पूर्णचन्द्रेण वा पूर्णचन्द्रराशिना वा वदेत् । एकादशेन 'मेषे नृपसेनापति' इत्यादिं तथा वदेत् । द्वादशेन शयनस्य शुभाशुभत्वं वदेत् । जलस्थलराशिवशात् जलस्थलप्रदेशं च शुभाशुभवशात् स्वप्नं जागरणं च सर्वं निरूप्य वदेत् ॥१४॥

[इति कृष्णीयव्याख्यायां चतुरसुन्दर्यां षोडशोऽध्यायः ।]

पुनरपि प्रष्टुः प्रश्नफलप्रत्ययार्थं भोजनमैथुननष्टादिषु एतानि फलानि वदेत्— उदयेऽप्यारूढे वा रविः स्थितश्चेत् भयचिन्तां करोति । सौरो रोगं करोति । कुजो युद्धं ताडनं वा । चन्द्रोऽपि मरणं वैकल्यं वा । बलाबलवशाद्वदेत् ॥१॥

गुरुः प्रथमद्रेक्काणोदये वस्त्रलाभं करोति । द्वितीयद्रेक्काणोदयेऽर्थलाभम् । तृतीयद्रेक्काणे स्त्रीलाभम् । मेषे नृपसेनापतिं वा । बुधो राशिफलं ददाति । शुक्रः उदये प्रथमहोरायामन्यस्त्रीसङ्गमनं, द्वितीयहोरायां वस्त्रलाभं करोति । 'मेषांशेऽजावी'ति यदुक्तं तद्राशिफलम् ॥२॥

दशमगो दिवसकरः प्रथमद्रेक्काणोदये स्थानचिन्तां, मध्यद्रेक्काणेऽर्थचिन्तां, तृतीयद्रेक्काणे रोगभयचिन्तां करोति । दशमगतश्चन्द्रो लग्ने प्रथमहोरायामर्थागमचिन्तां, द्वितीयहोरायां स्वजनबन्धुजनवार्तामिष्टकथां चैव करोति ॥३॥

---

* "आदौ चतुरश्रमपि त्र्यश्रं मध्ये ग्रहाः प्रकुर्वन्ति ।
राश्यवसाने वृत्तं स्वरूपतुल्यं हि वा कुर्युः ॥" इति पद्यं ख पाठे भयमर्क इति पद्यात्पूर्वं विद्यते ।

स्थानार्थज्ञानगतां करोति चिन्तां बृहस्पतिर्मध्ये ।
अरिवृद्धिमर्थनाशं स्थानात्परिवर्तन भौमः ॥४॥

स्थानभ्रंशं व्याधि प्रवासचिन्तां शनैश्चरः कुरुते ।
वस्त्रार्थागम[1]चिन्तां करोति शुक्रस्तु मध्यगो नभसः ॥५॥

मरणं प्रवासनं वा जामित्रेऽर्को[2] विनष्टचिन्तां वा ।
स्त्रीगर्भार्थाश्रयजां करोति चिन्तां गुरुश्च[3] त्र ॥६॥

स्वस्त्रीशीलभ्रंशं हृतं च मेढ्राश्रयं तथा रोगम् ।
कुरुते कुजेऽस्तमयगे[4] भ्रष्टाचारां भृगुर्नारीम् ॥७॥

---

दशमगतो गुरुरुदयद्रेक्काणक्रमात् स्थानचिन्तामर्थचिन्तां ज्ञानचिन्तां करोति । तथा कुजश्च शत्रुवृद्धिमर्थनाशं स्थानात्परिवर्तनं च करोति ॥४॥

शनिर्दशमगतः प्रथमद्रेक्काणोदये स्थानभ्रंशं करोति । द्वितीयद्रेक्काणे व्याधिं करोति । तृतीये प्रवासचिन्तां करोति । दशमे शुक्रः उदयराशिद्रेक्काणक्रमात् वस्त्रचिन्तामर्थागमचिन्तां च शय्यासनचिन्तामाज्ञाचिन्तामपि करोति ॥५॥

जामित्रे रवियुते द्रेक्काणक्रमेण मरणचिन्तां प्रवासचिन्तां नष्टचिन्तां वदेत् । गुरुः सप्तमगतश्चेत् चन्द्रहोरायां स्त्रीगर्भाश्रयचिन्तां करोति ॥६॥

प्रष्टुः स्वस्त्री । कुजेऽस्तमयगे उदयवशात् स्वस्त्रीदुःशीलं च अपहृतं च मेढ्राश्रयं रोगं च वदेत् । स्त्रियो वा गुह्याश्रयं वदेत् । शुक्रेऽस्तमयगे प्रष्टुः स्त्री भ्रष्टाचारा भवति अचारित्रा ॥७॥

---

१ 'मशय्यां भृगुराज्ञां मध्य' क, ख, ङ, छ, ज, झ, ट, ड, ढ, ण. २ 'सिन' क to घ, च, छ, झ, ड, ढ, ण, न, फ, ब, र. ३ 'र्द्यूने' ख. ४ 'कुजःऽस्तमयगो' ख, ङ, झ, न.

वृद्धां शीलभ्रष्टां सरोगविकलां शनैश्चरेऽस्तमये[1] ।
कुर्यात् स्त्रीकलहं वा चन्द्रः कांस्यं कुलाङ्गनानाशम् ॥८॥

हृच्छूलमङ्गदाहं रुधिरस्रावं नृपाद्भयं हिबुके ।
सूर्यः करोति भृगुजः स्त्रीजां गुरुरर्थजां चिन्ताम् ॥९॥

हिबुकेऽवनिजः कुरुते स्वजनविरोधं[2] च मानसं दुःखम् ।
त्रासभयमर्कसूनुर्निर्याणं वा वदेद्धिबुके ॥१०॥

नारीं शशिनि[3] सुरूपां करोति हिबुके बुधस्तु वादकरः ।
[4]फलमेतदेव वाच्यं त्रिकोणसंस्थग्रहैर्विधिवत् ॥११॥

इति कृष्णीयशास्त्रे सप्तदशोऽध्यायः[5] ।

---

अस्तमये शनैश्चरे स्थिते प्रष्टुरेव स्वस्त्रियं वृद्धां दुःशीलां रोगविकलां च उदयद्रेक्काणवशाद्वदेत् । स्त्रीमरणं वा वदेत् । चन्द्रः सप्तमे द्रेक्काणक्रमात् स्त्रीकलहं च कांस्यचिन्तां च स्त्रीनाशं च करोति ॥८॥

रवौ चतुर्थे लग्नं चतुर्धा कृत्वा चतुर्भागक्रमेण हृच्छूलमङ्गदाहं रुधिरस्रावं नृपाद्भयं हिबुके सूर्यः करोति । भृगौ चतुर्थे स्त्रीचिन्तां, गुरुरर्थागमचिन्तां करोति ॥९॥

कुजे चतुर्थे प्रथमहोरायां स्वजनविरोधम् । द्वितीयहोरायां मानसं दुःखम् । शनैश्चरे चतुर्थे प्रथमहोरायां महद्भयम् । द्वितीयहोरायां मरणं च चिन्तयति ॥१०॥

चन्द्रे चतुर्थे सुरूपनारीचिन्ता भवति । बुधश्चतुर्थे विवादं चिन्तयति । अत्र पूर्ववत् क्रमेण लग्नचतुर्थसप्तमदशमेषु इति ग्रहवशात् बलाबलं निरूप्य बलवद्ग्रहवशात्

---

१ 'ऽस्तमितः' क, ख, झ, न. २ 'वियोगञ्च' ग, ञ, ट, द, ध. ३ 'शशि सु' क, ख, ग, ङ, ज to ण, द, ध, ब, र. ४ 'चतुर्थगतचन्द्रमस्तफलमेव तदेव वाच्यं त्रिकोणनिलयैः' ञ. ५ 'ति द्वादशोऽध्यायः' ग; 'ति कृष्णीये चतुर्दशोऽध्यायः' झ; 'ति कृष्णीयशास्त्रे द्वादशोऽध्यायः' ज, ठ, द, प.

## अथाष्टादशोऽध्यायः

क्रूरेषु पतिं त्यजति प्रमदानन्दयति पतिमपापेषु ।
चन्द्रे पापसमेते पुरुषो भुङ्क्ते बलाद्रवौ नारीम् ॥१॥

*स्वदिशं ग्रहे प्रयाते स्वस्थे चात्मीययान्ययान्येषु ।
उच्चारिमित्रनीचाश्रयेण तेषां स्त्रियो वाच्याः ॥२॥

---

फलचिन्ता वक्तव्या । केन्द्रेषु ग्रहाभावे पञ्चमस्थितैश्चतुर्थवद्वदेत् । तदभावे नवमस्थितैः सप्तमवद्वदेत् । केन्द्रत्रिकोणेषु ग्रहाभावे कण्टके बलवद्राशिवशात् स्वामिचिन्ता वक्तव्या ॥११॥

[इति कृष्णीयव्याख्यायां चतुरसुन्दर्यां सप्तदशोऽध्यायः ।]



क्रूरेष्विति । अथ मैथुनप्र[श्नमा? श्न आ]रभ्यते । तत्र यदि कश्चिद् भार्यामात्मनि रक्तां विरक्तां वा ज्ञातुमिच्छति चेत्तदा उदयलग्नवशाद्वक्तव्यम् । पापग्रहदृष्टे लग्ने विरक्ता । सौम्यग्रहदृष्टे लग्ने सुरक्ता । चन्द्रेण पापयुतदृष्टे लग्ने विरक्ता । शुभदृष्टेन शुभयुतेन वा दृष्टे लग्नेऽनुरक्ता । चन्द्रेण रवियुतेन रविदृष्टेन वा दृष्टेऽप्यनुरक्ता भवति । चन्द्रवच्छुक्रोऽपि वक्तव्यः । अर्थान्तरेण च रवौ पापयुते पुरुषः स्त्रिया भुक्तो भवति । एवं चन्द्रशुक्रवीक्षितरहितेऽस्ते पापयुते मैथुनं न वक्तव्यम् । अन्यथा वक्तव्यम् । रविवर्गे चन्द्रे स्थिते रविदृष्टयुते वा पुरुषः सुभगः । सौम्यदृष्टयुते वा चन्द्रे स्त्री सुभगा । एवं तयोः स्नेहं च सौभाग्यं च वदेत् ॥१॥

स्वस्त्री वा परस्त्री वा तदपि वक्तव्यम् । यो ग्रहो लग्नं पश्यति स्ववर्गे स्थित्वा चेत् स्वकीये गृहे स्वकीया स्त्री, परवर्गस्थे परस्त्री । उच्चे स्थित्वा वीक्षते चेत् पूज्या राजस्त्री वा भवति । शत्रुवर्गस्थे शत्रोः स्त्री, मित्रवर्गस्थे बन्धुस्त्री, नीचस्थे नीचस्त्री भवति । तेन ग्रहेण विप्रादिवर्णान् योजयेत् । ग्रहस्थितद्रेक्काणाकृतिं

---

* रपाठे (२, ३, ४) पद्यानि न सन्ति ।

मेषाष्टमयोर्मेषोपगते स्वस्त्रीभिरेव सङ्गमनम् ।

मैत्र्या बुधभृगुभवने [1]शत्रोर्वध्वा [2]ततोऽन्येषु ॥३॥

[3]वेश्या कर्षकभार्या मन्त्रिस्त्री ब्राह्मणी नृपोपेता ।

कुजभृगुगुरुशशिरविभिश्शेषैः पाषण्डिनां युवतिः ॥४॥

विषमेषु ग्रहराशिषु मैथुनमेकं द्विवारमितरत्र ।

[4]बहुशो विभ्रमबहुळं भृगुकुजवर्गात्मके सुरतम् ॥५॥

---

स्वभावं प्रवृत्तिं च स्त्रीणां वदेत् । अटवीक्षेत्रादिसमागमभूमिमुदयेन वदेत् । विवाह-प्रश्नेऽप्येवमेव वदेत् । तत्रोदयवशात् स्त्रियः शुभाशुभं वदेत् । आरूढवशात् पुरुषस्य ॥२॥

छत्रेणापि स्त्रीनिर्णयः कथ्यते—मेषे आरूढे वृश्चिके छत्रे वा वृश्चिके आरूढे मेषे छत्रे वा तयोरप्येकस्मिन्नारूढे छत्रराशौ कुजे स्थिते स्वकीये गृहे स्वस्त्रीभिः सङ्गमनं वदेत् । मेषे वृश्चिके वा आरूढे मिथुनवृषतुलाकन्यासु एकः छत्रगतश्चेत् छत्रराशौ बुधशुक्रदृष्टे वा बन्धुस्त्री । मेषाष्टमयोरन्येषु राशिषु छत्रगतेषु शत्रोर्भार्यायाः सङ्गमनं वदेत् । एवमेव निरूप्य वदेत् । एवमन्येषु राशिषु वदेत् । उच्चगते पूज्या स्त्री । नीचगते नीचा तरुणी ॥३॥

परवर्गस्थे ग्रहे परकीये परस्त्रीविशेषः कथ्यते—कुजदृष्टे वेश्या । शुक्रदृष्टे शूद्रस्त्री । गुरुदृष्टे मन्त्रिणी । चन्द्रदृष्टे ब्राह्मणी । आदित्यदृष्टे नृपस्त्री । शेषैः बुधशनिराहुभिः पाषण्डी स्त्री वक्तव्या ॥४॥

अनेन सुरतप्रकार [मु? उ] च्यते—ओजराश्युदये ओजराशिस्थितग्रहदृष्टे एकमेव मैथुनम् । युग्मराश्युदये युग्मराशिस्थितग्रहदृष्टे द्विवारं मैथुनं वदेत् । शुक्रकुजयोर्वर्गे

---

१ 'त्र भार्या' क to च, ङ to झ, ट to ण, न, ब. २ 'तथान्ये' ख, ब.

३ 'तरुणो क' ख, ग, ङ, झ, ट, ठ, द, ध, प, ब. ४ 'बहुशो विभ्रमब' ब.

*होरात्रिकोणजामित्रभेषु शशिना सहार्कपुत्रश्चेत् ।
स्वप्नेषु सुरतमाप्तं[1] कुजश्चेत्कोपेन जागरितम् ॥६॥

£लग्नगते रवितनये जामित्रे भूमिनन्दने सभयम् ।
इतरेतरालयस्थौ यदि[2] सौरारौ च जागरितम् ॥७॥

अस्मिश्चन्द्रेऽन्यतरेण युते नार्या सहात्र कलहः स्यात् ।
यमकुजराशिषु[3] भृगुजो यदि परशय्यास्त्रियो वाच्याः ॥८॥

---

उदिते बहुश असकृन्मैथुनं वदेत् । तत्र वात्स्यायनोक्तप्रकारं मिश्रर्विवर्गेऽहनि । चन्द्रवर्गे मिश्रे रात्रौ ॥५॥

लग्नत्रिकोणसप्तमेषु शशिना सहार्कपुत्रः स्थितश्चेद्रात्रौ स्वप्ने मैथुनं वदेत् । चन्द्रसहितः कुजः स्थितश्चेत् कलहात्तयोर्जागरं वदेत् । ऋतुमद्द्रेक्काणवशाद्रजस्वला परस्त्री । तेषु रविः सचन्द्रः स्थितश्चेत् स्त्रीगुह्यस्पर्शनादि मैथुनरहितं वदेत् । सचन्द्रो जीवः स्थितश्चेत्सविलासहासयुतं मैथुनम् । तत्र गर्भोत्पत्तिः । अथवा गर्भस्त्रीमैथुनं वदेत् । बुधश्चेत् परस्त्रीमैथुनमेव । शुक्रयुक्ते चन्द्रे तेषु बहुस्त्रीसङ्कथनं वदेत् ॥६॥

लग्ने मन्दयुते सप्तमे कुजे अथवा व्यत्ययाद्वा चोरभयाद्वा अग्निभयाद्वा तयोर्बलयुतेन जागरं वदेत् । सर्वत्र गताविवतरेतरराशिगतौ यदि जागरितं पूर्ववत् ॥७॥

अस्मिन् लग्नसप्तमे यमकुजयोरन्यतरेण युतश्चन्द्रः स्थितश्चेन्नार्या सह कलहं वदेत् । लग्ने स्थितश्चेत् पुरुषविषयात्, सप्तमे स्त्रीविषयात् । अस्मिस्तयोरेकेन युतः शुक्रश्चेत् तयोः कलहात् परशय्यास्वप्नं वदेत् । राशिग्रहणं ग्रहवत् तस्य क्षेत्रमित्यर्थः ॥८॥

---

१ 'तं तत्र कुज' ख. २ 'तु' ख. ३ 'जे' ख, घ, ङ, च, झ, ञ, फ, ब.

---

* पद्यमिदं घचफञ्पाठेषु नास्ति ।

£ पद्यमिदं गबपाठयोर्नास्ति, रपाठे उत्तरार्धं परमस्ति ।

*जामित्रगते चन्द्रे कुजे तु दशमेऽथवा तृतीयेऽस्मिन् ।
शुक्रे भूमौ शयनं कलहनिमित्तेन[१] संवृत्तम्[£] ॥९॥
होरातृतीयसप्तमचतुर्थभवनेषु चन्द्रशुक्रौ चेत् ।
विद्याद् वस्त्रच्छेदं कलहनिमित्तेन[२] नारीणाम्[३] ॥१०॥

इति[४] कृष्णीय[५]शास्त्रे[६]ऽष्टादशोऽध्यायः ।

$ जामित्रगते चन्द्रे दशमे तृतीये वा कुजे स्थिते[1] स्त्रिया कलहेन भूमौ शयनं संवृत्तमिति वदेत् । शुक्रे सप्तमगे पूर्ववत् । कुजे स्थिते परस्त्रिया कलहेन भूमौ शयनमिति वदेत् ॥९॥

उक्तस्थानेषु चन्द्रशुक्रौ[2] एकत्र स्थितौ चेत् कलहेन वस्त्रच्छेदो वक्तव्यः । तत्र सप्तमे पुरुषग्रहे स्त्रीवस्त्रच्छेदः । विपरीते विपरीतम्[3] ॥१०॥

[इति कृष्णीयव्याख्यायां चतुरसुन्दर्याम् अष्टादशोऽध्यायः ।]

---

१ 'मित्त सुसंवृत्त' ख. २ 'मित्तं हि ना' ख. ३ 'म् । रहस्यप्रकरणं समाप्तम् । इति कृष्णीयशास्त्रे षोडशोऽध्यायः' क, ड, ढ, ण; 'म् रहस्यप्रकरणं समाप्तम्॥' छ. भ. म; 'म् । रहस्यप्रकरणम्' ब. ४ 'इति त्रयोदशोऽध्यायः' ग; 'इति रहस्यप्रकारेण' ङ; 'इति कृष्णाय पञ्चदशोऽध्यायः' झ. ५ 'ये सुरतचिन्ताध्यायस्त्रयोदशः' प. ६ 'स्त्रे त्रयोदशोऽध्यायः' ठ, द

---

1 'ते स्त्रस्त्रि' ख, ज, झ. 2 'क्रौ युगपत् पृथग्वा स्थितौ कलहनिमित्तेन नारीणां वस्त्रच्छेदं कुरुतः । जामित्रेऽस्ते शुक्र इति सम्बन्धः । कलहस्त्रिदिनं वर्ततेऽविकल इति रहस्यम् ।' च. 3 'म् । इति कृष्णीयशास्त्रव्याख्यायां चतुरसुन्दर्याख्यायां सुरतचिन्ताध्यायस्त्रयोदशः' ज.

---

* पद्यमिदं गद्यपाठयोर्नास्ति । £ एतदनन्तरं रपाठे नष्टप्रश्नाद्यध्यायगतानि कानिचित्पद्यानि विना क्रमं दृश्यन्ते । $ एतद् व्याख्यानं जामित्र इति पद्यञ्च गछपाठयोर्नास्ति । घजपाठयोर्व्याख्यानमिदं नास्ति ।

## अथैकोनविंशोऽध्यायः

ज्योतिषिको वनवासो व्यन्तरसुरसत्तमा विनिर्दिष्टाः ।
एते चतुष्प्रकारा ग्रहावलोकेन जायन्ते ॥१॥

राक्षसपिशाचयक्षास्तथैव किन्नरसभूतनागगणाः ।
भौमयमशुक्रबुधगुरुचन्द्रेष्विन्द्रा रवौ देवाः ॥२॥

श्रीरुद्रविष्णुदुर्गाब्रह्मकुमाराश्च लोकपालयुताः ।
शुक्रार्कसौम्यशीतगुगुरुकुजसौरेषु जानीयात् ॥३॥

---

एते देवजातयो ग्रहावलोकेन जायन्ते । प्रष्टुश्चेष्टाकारकम्पनादिभिर्बाधां ज्ञात्वा ग्रहवशाद्राशिवशाद्वा जातिभेदं वदेत् । चतुष्प्रकारा देवताः । प्रथमो ज्योतिषिको गणः सूर्यचन्द्रवत् ज्योतिर्मयाः प्रत्यक्षरूपिणः । द्वितीयो वनवासी गणः असुरभुजगाः पाताळवासिनश्च । तृतीयो व्यन्तरगणः मनुष्येष्वाविश्य बलिभोक्तारः । चतुर्थो देवगणः स्वर्गवासिनः । सर्वे ग्रहराशिवशा[ज्जानीयाः ? ज्ञेयाः] कथमिति चेत् प्रथमगणस्यार्ककुजौ चतुष्पाद्राशयश्च । द्वितीयगणस्य चन्द्रशुक्रौ जलराशयश्च । तृतीयगणस्य शनिराहू सरीसृपराशिश्च । चतुर्थगणस्य गुरुबुधौ द्विपाद्राशयश्च । प्रश्नकाले विमृश्यैवं वदेत् । एषां गत्यनूकचिन्तायामप्युपयोगः ॥१॥

पूर्वोक्तगणस्य विशेषः कथ्यते—कुजस्य राक्षसाः । शनेः पिशाचाः । शुक्रस्य यक्षाः । बुधस्य किन्नराः । गुरोर्भूतगणाः । रवेरिन्द्रः । एते देवता ग्रहावलोकनाद् विज्ञेया बलयुतेन ॥२॥

शुक्रस्य श्रीः । सूर्यस्य महादेवः । बुधस्य विष्णुः । चन्द्रस्य दुर्गा । गुरोर्ब्रह्मा । कुजस्य सुब्रह्मण्यः । सौरस्य लोकपालाः । एते ग्रहदेवताः तेषां स्थानवासिनो वा पूर्वोक्तदेवता भवन्ति । तेष्वेव चोरस्य निवासः । स्वकेन्द्रगतेषु प्रष्टुः कुलदेवता । उच्चगते 'श्री रुद्र' इत्यादिर्ग्राह्यः । अन्यत्र बन्धुशत्रुगते 'राक्षसपिशाच' इत्यादि । मित्रक्षेत्रगते मित्रवदाचरति । शत्रुगते रोगाय भवति देवता । क्रूरेषु लग्नसप्तमाष्टमगतेषु देवताभिर्महापीडां वदेत् । ग्रहे लग्नगते प्रतिबिम्बं देयम् । सप्तमगे नृत्तं देयम् । अष्टमगे बलिर्देयः । चतुर्थगते गृहारामो देयः ॥३॥

*ग्रहराशिभिर्विचार्य ज्योतिषिकाः पृच्छते फलं ब्रूयुः ।
यमसदृशफलो राहुः स्वामिफला राशयस्सर्वे ॥४॥
मनुजग्रहभवनेषु हि वस्त्राभरणादि सन्ति देवानाम् ।
न भवन्ति शेषराशिग्रहेषु वर्णान् ग्रहैर्ब्रूयात्[१] ॥५॥

इति कृष्णीयशास्त्रे[२] एकोनविंशोऽध्यायः[३] ॥

## अथ विंशोऽध्यायः

मेषे नृपसेनापतिचोरस्थानानि पृच्छते ब्रूयात् ।
गन्धाच्छादनमाल्यचतुष्पदकर्षककथा वृषभे ॥१॥

---

ग्रहराशिभिर्विमृश्य ज्योतिषिकाः प्रष्टुः फलं ब्रूयुः यत्र राहोः फलं नोक्तं तत्र शनैश्चरफलमेव वक्तव्यम् । ग्रहरहितराशीनामपि ग्रहवत् फलं वक्तव्यमिति सार्वत्रिकोऽयं विधिः ॥४॥

मनुष्यग्रहराशिषूदितदृष्टेषु देवानां वस्त्राभरणशस्त्राणि सन्तीति वदेत् । ग्रहस्थितद्रेक्काणं वा उदितद्रेक्काणं वा विमृश्य वस्त्रादीन् वदेत् । शेषराशिग्रहेषु स्वं स्वं वदेत् । उच्चगतस्य देववद्वदेत्[1] ॥५॥

[इति कृष्णीयव्याख्यायां चतुरसुन्दर्याम् एकोनविंशोऽध्यायः]

---

यस्य कस्यचिद्राशेर्मेषनवांशके उदिते फलमुच्यते— वृषांशे वृषाद्यंशकेषु यानि सन्ति

---

१ 'त् ॥ देवचिन्ता समाप्ता । इति कृष्णीयशास्त्रे सप्तदशोऽध्यायः' क, ख, ढ, ण; 'त् ॥ देवचिन्ता समाप्तम्' छ; 'त् ॥ देवचिन्ता समाप्ता' भ, म. २ 'ति चतुर्दशोऽध्यायः' य; 'ति देवचिन्ता' ड; 'ति कृष्णीये शोडशोऽध्यायः' ञ; 'ति कृष्णीये चतुर्दशोऽध्यायः' ठ. ३ 'स्त्रे चतुर्दशोऽध्यायः' द, प.

---

1 'त् ॥ इति कृष्णीयव्याख्यायां चतुरसुन्दर्याख्यायां चतुर्दशोऽध्यायः । देवचिन्ता समाप्ता ।' ज.

---

* पद्यमिदं बपाठे नास्ति ।

गन्धर्वहास्यनर्तकमैथुननारीकथा[1] भवेन्मिथुने ।
आरामोद्यानौषधशय्या राशौ चतुर्थे स्युः ॥२॥

सिंहेऽरण्यचतुष्पददुर्गगुहालेख्यवस्त्रगन्धर्वाः[2] ।
षष्ठे सप्तमराशौ मानतुलाभाण्डमद्यानि ॥३॥

*कीटाग्निजीविगोम्यहिभोजनविषहास्तु वृश्चिके लग्ने[3] ।
दैवज्ञविप्रगुरुमाल्यगन्धाश्वयोधस्त्रियो[4] नवमे ॥४॥

---

फलानि कीर्त्यन्ते—तत्तदंशकं तावद्भेदं कृत्वा यथासंख्यं फलानि वाच्यानि । मेषांशं त्रिधा कृत्वा राजा, सेनापतिः, चोरस्थानम् । वृषांशे गन्धः, आच्छादनं, माला, चतुष्पात्, शूद्रः । वृषांशं पञ्चधा कृत्वा क्रमाद्वदेत् ॥१॥

मिथुनांशोदये तमंशकं पञ्चधा कृत्वा प्रथमभागे गन्धर्वाः, द्वितीयभागे विदूषकाद्याः, तृतीयभागे नर्तकाः, चतुर्थे मैथुनं, पञ्चमे नारीकथा । कर्कटकांशं चतुर्धा कृत्वा आरामः, उद्यानं, औषधं, शयनं क्रमाद्वदेत् ॥२॥

सिंहांशं चतुर्धा कृत्वा अरण्यं, चतुष्पदः, दुर्गमप्रदेशः, गुहाप्रदेशं च । कन्यांशं त्रिधा कृत्वा क्रमात् लेख्यवस्त्रगन्धर्वा इति । तुलांशे क्रमात् मानं, तुलायष्टि, भाण्डं, मदकरवस्तूनि इति ॥३॥

वृश्चिकनवांशके षडेतानि वाच्यानि क्रमात् । प्रथमे कीटः । ततोऽग्निजीविनः । गोमीति जळूकः । सर्पः । भोजनम् । विषहा । धनुरंशकं सप्तधा कृत्वा प्रथमेंऽशे दैवज्ञः । विप्रः, गुरुः, माल्यं, गन्धः, अश्वयोधाः, स्त्री । यथांशमवगन्तव्यम् ॥४॥

---

१ 'गा' ख, ग, ङ, च, ज, ट, ठ, द, ध, प, ब. २ 'गान्ध' ख, घ, ङ, च, ज, झ, ञ, न, ब. ३ 'वृश्चिकांशगते' ख. ४ 'गन्वयोधस्त्रि' ख.

---

* इदमर्धं ग ठ द ध प पाठेषु नास्ति ।

मकरे मैथुनपाषण्डिवृद्धभक्ष्याणि वाद्यकथितानि ।
*दीर्घनखदीर्घरोमपुरुषस्त्रीनरयुगं क्रमाज्ञेयम् ।।५।।

रमणीयरूपनारीसुहृदुत्पलमत्स्यपङ्कजानि झषे ।
कथिता लब्धा दृष्टाश्चैते राश्यंशकैर्ज्ञेयाः[१] ।।६।।

इति कृष्णीयशास्त्रे[२] विंशो[३]ऽध्यायः ।

---

[1] मकरांशं पञ्चधा कृत्वा मैथुनं, पाषण्डी, वृद्धः, भक्ष्याः, वाद्यं क्रमादवगन्तव्यम् । [2] कुम्भांशं पञ्चधा कृत्वा दीर्घनखाः, दीर्घरोमा, पुरुषः, स्त्री, नरयुग्मं क्रमाज्ज्ञेयम् ।।५।।

मीनांशं पञ्चधा कृत्वा प्रथमांशे रमणीयरूपा नारी, सुहृद्, उत्पलम्, मत्स्यं, पङ्कजम् । एतेषां कथितवस्तूनां कथा वा लाभं वा दर्शनं वा भवतीति वदेत् । अंशकोदये राश्युदये वा वक्तव्यं तयोर्बलयुतेन[3] । [यस्य कस्यचिद् ? यस्मिन् कस्मिश्चिद्] राशौ प्रथमद्रेक्काणोदये कथां वदेत् । द्वितीयद्रेक्काणोदये लाभं वदेत् । तृतीयद्रेक्काणोदये दर्शनं वदेत् । सप्तमे ग्रहयुक्ते दर्शनम्, द्वितीयतृतीययोः कथाश्रवणं वदेदिति केचिद्वदन्ति । एतानि लक्षणानि मुहूर्तेषु वदेद्विद्वानिति[4] ।।६।।

[इति कृष्णीयव्याख्यायां चतुरसुन्दर्यां विंशोऽध्यायः ।]



---

१ 'याः ।। अंशकफलं समाप्तम् । इति कृष्णीयशास्त्रे एकोनविंशोऽध्यायः' क, ड, ढ, ण; 'याः ।। अंशकफलम्' ङ. ए; 'याः ।। अंशकफलं समाप्तम्' भ, म. २ 'ये पञ्चदशोऽध्यायः' । ग, ठ; 'ये सप्तदशोऽध्यायः' । झ. ३ 'स्त्रे पञ्चदशोऽध्यायः' । द.

---

1 'चतुर्धा कृ' ग, घ, ङ, च, छ, झ, ञ. 2 'चतुर्धा कृ' ग, छ, झ, ञ. 3 'ते नीचस्य कस्यचिद्रा' क, घ, ङ. 4 'ति । इति कृष्णीयशास्त्रव्याख्यायां चतुरसुन्दर्याख्यायां पञ्चदशोऽध्यायः' । 'अंशकफलचिन्ता समाप्ता' ज.

---

* दीर्घेत्याद्यर्धस्य स्थाने 'रूढनखरोमपुरुषप्रमदायुग्मानि कुम्भधरे' इति सर्वेषु ग्रन्थेषु पाठोऽस्ति । तथापि घ च न फ पाठेषु 'रूढनखे'त्यादि पाठं लिखित्वा 'दीर्घनखे'ति पाठोऽपि लिखितः । अयमेव व्याख्यानुरोधी पाठः तस्मादत्र अयं पाठः स्वीकृतः ।

## अथ एकविंशोऽध्यायः

दिवसकरस्य पुरस्ताच्चतुर्थराशीश्वरो भवति केतुः ।
राहुरपि पृष्ठतः किल चतुर्थ इष्टोऽर्कचारवशात्[1] ॥१॥

*चोराहृतार्थकलहव्याधिभयचतुष्पदो[2] यथाक्रमशः ।
आरशनैश्चरगुरुभृग्विन्दुजशीतांशुसूर्याणाम् ॥२॥

यद्यर्कगृहे केतुर्लग्ने नृपमानलाभसम्पत्तिम् ।
स्थानार्थपुत्रलाभं करोति केतुर्यदार्किगृहे ॥३॥

यमराशिफलं शौक्रे दायादफलं[3] च युवतिनाशं च ।
सौरस्योक्तं भौमालयेऽपि च यासंयुक्तम् ॥४॥

---

रविगतराशेः पुरस्ताच्चतुर्थराश्यधिपतिः केतुर्नाम भवति । पश्चाच्चतुर्थराशीश्वरो राहुर्भवति । रविचारवशाज्ज्ञेयौ ॥१॥

एकैकस्य ग्रहस्य एकैकचिन्ता कथ्यते—भौमस्य चोरचिन्ता । शनैश्चरस्य हृतद्रव्यम् । गुरोरर्थः । शुक्रस्य कलहः । बुधस्य व्याधिः । चन्द्रस्य भयम् । रवेश्चतुष्पात् । अयं श्लोको दिवसकरस्येत्यादेः पुरस्तात्पतितः ॥२॥

एवं केतुराहू ज्ञात्वा ताभ्यां फलमुच्यते—अर्कराशिगतः केतुर्लग्ने स्याद् द्रेक्काणक्रमाद् नृपपूजां चार्थलाभं च सर्वसम्पत्तिं च वदेत् । आर्किराशौ केतुर्लग्नगतश्चेत् क्रमात् स्थानलाभं चार्थसिद्धिं च पुत्रलाभं च वदेत् ॥३॥

शुक्रक्षेत्रगतस्य केतोर्यमराश्युक्तफलानि वदेत् । इदमपि वृषभवने दायादगृहलाभादि वदेत् । तुलालग्ने स्त्रीनाशं च वदेत् । सौरक्षेत्रगतस्य केतोः फलं कुजक्षेत्रगतस्यापि वदेत् । इदमप्यधिकं रोगं च ब्रूयात् ॥४॥

---

१ 'र्कजावेशात्' ख. २ 'रहृ' ख, ग, झ, ट, ठ, द, ध, ब. ३ 'दमयश्च' ख, ग, घ, ज, ठ, द to फ, द, ध.

---

* घ च पाठयोरेतत्पद्योत्तरार्धं नास्ति । पपाठे पद्यमिदं नास्ति । दब पाठयोः पद्यमिदं दिवसकरस्येति पद्यात्पूर्वं लिखितम् ।

बौधेऽम्बरार्थनाशं चान्द्रे नृपभीतिपुत्रनाशौ च ।
व्याधिं गृहस्य नाशं गुरुराशिगते भवति केतौ ॥५॥

भृगुचन्द्रामरगुरवो यदि लग्नगताः स्युरत्र कालवशात् ।
कुर्वन्त्याज्ञां[1] पूजां मित्रार्थं[2] युवतिपुत्रसम्पत्तिम् ॥६॥

*यदि भवति केतुरिन्दूशनसोरेकेन[3] संयुतो लग्ने ।
जनयति गर्भोत्पत्तिं सौरारयुतो[4] विनाशयति ॥७॥
केतुः शशाङ्कयुक्तो भृग्वङ्गिरसोरथैकतरयुक्तः ।
कुरुते गर्भोत्पत्तिं जातमरोगं[5] बलोपेतः ॥८॥

---

बौधे मिथुनगतस्य केतोः अम्बरनाशं वदेत् । कन्यागतस्यार्थनाशम् । चान्द्रे कर्कटगतस्य सूर्यहोरायां नृपभयं चन्द्रहोरायां पुत्रनाशं गुरुराशिगतक्रमवशाद् व्याधिं गृहनाशं च वदेत् ॥५॥

अत्र केतुलग्ने केतुभवने वा सहस्थिताः शुक्रचन्द्रजीवाः आज्ञादिफलानि कुर्वन्ति । तत्राज्ञां पूजां करोति शुक्रः । मित्रार्थसिद्धिं युवतिलाभं च चन्द्रः । गुरुः पुत्रलाभं सम्पत्तिं च ॥६॥

गर्भप्रश्ने£ सदसद्भावं भवेत् । तत्र केतुः (चन्द्र)शुक्रयोरेकेन युतश्चेत् गर्भं जनयति । तौ ध्वजहस्तद्रेक्काणस्थौ एवमेव वदेत् । केतुः पापग्रहयुतश्चेत् गर्भनाशो भवति । एके चन्द्रशुक्रयोरेकेन युतो बुधश्चेत् गर्भं कुरुते पापयुतश्चेन्नाशयतीति व-(देत् ? दन्ति) ॥७॥

शशाङ्कयुक्तः केतुः भृग्वङ्गिरसोरेकेन युतश्चेत् गर्भोत्पत्तिं कुरुते । केतुवद् बुधश्चेद् गर्भस्थस्य वा जातस्य वा अरोगं सुखं ज्ञेयम् ॥८॥

---

१ 'न्त्याश्रयपूजां मि' ख, ग, ज, ञ, ट, ठ, द, ध, प. २ 'त्रार्थकळत्रपुत्रस' ख, घ, ङ, झ, ञ, ठ, द, ध, प. ३ 'सोरन्यतरसं' ग, झ, ट, ठ, द, ध, प. ४ 'रयुतश्चेद्वि' ख. ५ 'गं बुधो ब' क, ख, ङ, छ, ट, ड, ढ, ण.

---

* पद्यमिदं ञपाठे नास्ति । £ ङ पाठे इतः परं 'शुक्रेण केतुरुदितश्चेत्' इति दशमपद्यभागमारभ्यैवास्ति ।

पुत्रस्य वातरोगं कुरुते रजनीशसूनुनोपेतः ।
गृहमपि जितमङ्गनया प्रष्टुर्गमनं च निर्देश्यम् ॥९॥

*प्रमदाभोजनगर्भोत्पत्तिं शुक्रेण केतुरुदितश्चेत् ।
बन्धनमरणं कुरुते कनकविनाशं च भौमेन ॥१०॥

सौरेण युतः केतुर्गृहदहनं वित्तसन्निरोधं च ।
भौमेन वीक्षितोऽसौ परयोषित्सङ्गमं वदति ॥११॥

भृगुराशावंशे वा केतुर्लग्ने रहस्यसङ्कथनम् ।
यदि दृष्टोऽर्कसुतेन तु [1]दास्या गुरुयोषितां चोक्तम् ॥१२॥

---

केतुर्बुधेन युक्तश्चेद् जातस्य पुत्रस्य वातरोगं वदेत् । गृहं वा भार्यया जितम् । गमनं पृच्छति चेत्तद्भवतीति वदेत् ॥९॥

केतुः शुक्रेण सहोदितश्चेत् प्रमदालाभं भोजनं गर्भलाभं च कुरुते । यदि केतुः भौमेन सहोदितश्चेत् बन्धनं मरणं कनकविनाशं वा करोति । अग्निभयं च करोति ॥१०॥

केतुस्सौरेण सहोदितश्चेद् गृहदहनं चोरभयं च वित्तनाशं च वदेत् । केतुर्भौमवीक्षितश्चेत्परयोषित्सङ्गमं वदति ॥११॥

भृगुराशौ तदंशे वा स्थितः केतुरुदितश्चेत् स्त्रीरहस्यसङ्कथनं मैथुनसङ्कथनप्रसङ्गं वदेत् । स केतुः शनैश्चरदृष्टश्चेत् दास्या वा गुरुयोषिता वा मन्दस्थितांशवशात् कथयेत् ॥१२॥

---

१ 'दास्यां गु' ख, घ, च, ज, ट, न, प.

---

* पद्यमिदं धपाठे नास्ति ।

स्त्रीरहितं जागरणं विवादममरगुरुशुक्रबुधदृष्टे ।
गुरुचन्द्रवीक्षणाभ्यां वदन्त्यलङ्कारलाभं च ।।१३।।

चोरसमागमदूषणपत्नीद्रोहं विदेशगमनं च ।
यद्यत्र पापयुक्तो[1] ददाति संपृच्छमानाय ।।१४।।

इ[2]ति कृष्णीयशास्त्रे एकविंशोऽध्यायः ।

अथ द्वाविंशोऽध्यायः

अथ भौमयुतं राहुक्षेत्रं होरागतं यदा भवति ।
अर्थवियोगं कु[3]रुतेऽन्येन च योजयत्याशु ।।१।।

---

पूर्वोक्तकेतौ क्रमेण गुरुशुक्रबुधदृष्टे स्त्रीरहितं स्वप्नं कलहाज्जागरणञ्चोद्[1]ग्राहं च वादं च गुरुशुक्रबुधानां क्रमात् त्रीण्यपि वदेत् । यदि केतुरेकराशिगतौ चन्द्रजीवौ वीक्षते तदा अलङ्कारादिलाभं चकारान्मैथुनं च भवति ।।१३।।

केतुः पापयुक्तश्चेदेतानि ग्रहवशाद्वदेत्—चोरसमागमदूषणत्वं च पत्नीद्रोहं च विदेशगमनं च प्रष्टुः ब्रूया[2]त् ।।१४।।

[इति कृष्णीयव्याख्यायां चतुरसुन्दर्याम् एकविंशोऽध्यायः ।]

---

अथशब्दः पुनर्वृत्तिवचनः । कुजयुतं राहुभवनं लग्नगतं चेदर्थवियोगं कुरुते । द्रव्यसम्भवं च नाशं च क्षिप्रं वदेत् ।।१।।

---

१ 'य ।। केतुफलं समाप्तम्' क, ड, ढ, ण, भ, म. २ 'ति केतुफलं षोडशोऽध्यायः' ग; 'ति केतुफलम्' ङ; 'ति कृष्णीयेऽष्टादशोऽध्यायः' ञ; 'ति कृष्णीये षोडशोऽध्यायः' ठ; 'ति कृष्णीयशास्त्रे केतुफलन्नाम षोडशोऽध्यायः' द; 'ति कृष्णीये केतुफलाध्यायः' ध; 'ति कृष्णीये केतुफलः षोडशः' प. ३ 'रुते मित्रवियोगञ्च यो' ख.

1 'द्ग्रहवादं च प्रष्टुः ब्रूयात् । केतुफलं समाप्तम्' ग. 2 'त् । इति कृष्णीयव्याख्यायां चतुरसुन्दर्याख्यायां केतुफलनिरूपणं षोडशोऽध्यायः' ज.

यदि सौरयुते लग्ने पूर्वोक्तफलेन गर्भनाशमपि ।

कथयति गुरुणा युक्तः[1] पश्चाल्लाभं प्रवृद्धिकरम् ।।२।।

कलहं कार्यविघातं पुरुषवियोगं तथोत्सुकत्वं च ।

देहविशेषे वातं कुजबुधयुक्तः[2] सदा कुरुते ।।३।।

*त्रिषु वा सप्तसु मासेषूदयतीन्दुरसृजमङ्गेषु ।

उदितश्चेद् भौमगृहे तच्चेद्राहोर्गृहं भवति ।।४।।

वातव्याधिं जनयति नार्याश्चन्द्रोऽत्र गुरुयुते लग्ने[3] ।

फलमेतदेव वाच्यं नैशाकरिणोदयस्थेन ।।५।।

---

सौरयुते राहुक्षेत्रे लग्नगते पूर्वोक्तफलेन सह गर्भनाशं वदेत् । एवं सौरगुरुयुक्तश्चेत् पश्चात्पुनः पुत्रलाभं करोति प्रवृद्धिं च ।।२।।

देह[योगः ? विशेषः] पूर्वोक्तः । तस्मिन् वातरोगं च सदा कुरुते द्वयोरेकयुक्त इति ।।३।।

भौमगृहे राहुगृहसंज्ञे चन्द्रमा उदितश्चेद् येन केन प्रकारेण प्रष्टुरङ्गाद्रुधिरस्रावं जनयति उत्पादयति चन्द्रः तृतीये मासे सप्तमे वा । जन्मषष्ठाष्टमेषु वा युते चन्द्रे रुधिरस्रावो भवति ।।४।।

राहुक्षेत्रे लग्ने गुरुसहितश्चन्द्रोदयश्चेद् नार्या वातरोगं वदेत् । भविष्यति । अथ चन्द्रो राहुक्षेत्रे लग्ने बुधेन सह युतश्चेदङ्गनाया वातरोगमेव वदेत् ।।५।।

---

१ 'णा दृष्टः' ख, ञ. २ 'क्तस्तथा कु' क, ख, ज, ञ, ड. ण. ३ 'नार्या गुरुसयुते लग्ने' ख.

---

* पद्यमिदं बपाठ नास्ति ।

*चोरेक्षणार्थनाशौ विदेशगमनं च चित्तसम्मोहम् ।
रविगतिवशेन राहुर्लग्ने भौमालये कुरुते ॥६॥

£सौरेणार्थ[1]विनाशो विदेशगमनं च चित्तसम्मो[2]हः ।
भृगुणा सहितो रोगं करोति हानिं च नारीणाम् ॥७॥

कार्यार्थनाशमाहुर्बुधस्य शुक्रस्य चाङ्गनानाशम् ।
बहुतरसुतार्थलाभं करोति सौरस्य वेश्मगतः ॥८॥

अङ्गन[3]याम्बरहानिं कार्यविनाशं करोति गृहदा[4]हम् ।
नीचजनेभ्यः पूजां पितृमरणं चार्कराशिगतः ॥९॥

सम्पादयति स्थानं मानं द्रव्यं च गुरुगृहे लग्ने ।
चन्द्रावासे जनयति पूजां पीडां जनन्याश्च[5] ॥१०॥

रविगत्या पूर्वोक्तराहुर्भौमालयस्थो यदि तदोदयति तदा चोरदर्शनार्थनाशौ भवतः । विदेशगमनं च चित्तसम्मोहं च वदेत् ॥६॥

अथ राहुः सौरसहितो लग्नगतश्चेदर्थनाशो भवति । क्रोधाद्विदेशगमनं च भवति । भृगुणा युतो भार्यारोगं नारीणां मरणं च करोति ॥७॥

राहुर्बुधक्षेत्रलग्नगतोऽर्थनाशं कार्यनाशं करोति इति सर्वे आहुः । शुक्रस्य क्षेत्रे अङ्गनानाशम् , सौरवेश्मनि बहुतरसुतार्थलाभं करोति ॥८॥

राहुरर्कराश्युदितो गृहदाहं च अधमजनेभ्यः पूजां पितृमरणं च करोति ॥९॥

राहुसहिते गुरुगृहे लग्ने स्थानं मानं द्रव्यं च सम्पादयति सञ्जनयतीति । चन्द्रराशिगतः सर्वजनपूजां मातृवियोगं च ॥१०॥

१ 'नाशं वि' ख, घ, ज, झ, फ, ब. २ 'हम्' ख. ३ 'नवाम्ब' ख. ४ 'हनाशम्' ख, झ. ५ 'श्च ॥ राहुफलं समाप्तम्' क, छ, ज, ड, ढ, ण, भ, म; 'श्च ॥ राहुफलम्' ङ.

* ट फ पाठयोः पद्यमिदं नास्ति । £ गजठपाठेष्विदं पद्यं नास्ति ।

¹इति कृष्णीयशास्त्रे द्वाविंशोऽध्यायः ॥

## अथ त्रयोविंशोऽध्यायः ।

रविगतराशावुदिते तदनन्तरमुदयगे तु भृगुयुक्ते[2] ।
कनकस्य सिद्धिनाशौ भवत इति ब्रह्मशौण्डमतम् ।।१।।
शुक्रादपि भौमयुते भौमात्सौरिस्ततः परं सौम्यः ।
आद्यस्ताम्रविनाशो बुधस्य नाशो[3] भवत्ययसः ।।२।।
ग्रहपतिलग्ने नाशश्चतुष्पदानां कुजस्य मृत्युभयम् ।
रविबुधयोः कीटभयं बुधलग्ने बन्धुसुतनाशः ।।३।।

[इति कृष्णीयव्याख्यायां चतुरसुन्दर्यां द्वाविंशोऽध्यायः]

आदित्यस्थितराशावुदिते तदनन्तरं द्वितीयराशावुदिते भृगुयुक्ते सति तत्रादित्योदये स्वर्णसिद्धिर्भवति । अथ शुक्रयुते लग्नगते सुवर्णनाशो भवति ।।१।।

शुक्राद् द्वितीयराशौ भौमयुते अथवा भौमाद् द्वितीये सौरयुते प्रथमराशौ तयोस्ताम्रविनाशो* भवति । द्वितीये त्रपुलाभः अर्थदिवान्वेष्यः । सौरलग्ने द्वितीये बुधयुक्ते अयोलाभो भवति । बुधलग्ने द्वादशे अयसो नाशो भवति । शुद्धायसमायुधमित्यर्थः । एतच्छ्लोकद्वयार्थः ब्रह्मशौण्डाचार्यमतम् ।।२।।

ग्रहपतिरादित्यः । तस्योदये चतुष्पाल्लाभं पृच्छति चेत् पूर्वार्जितानां नाशो भवति । कुजलग्ने मृत्युभयं च वदेत् । सूर्यबुधयोर्लग्ने कीटजनितं भयं वदेत् ।

१ 'ये एकोनविंशोऽध्यायः' झ. २ 'गुपुते' ख, ङ. ३ 'धनस्य ना' क, ख, ग, ङ. ञ to ण, द, ध, प, ब.

* अपठे इतोऽनन्तरं 'कर्कटके सकुजे' (अ० २४ श्लो० १०) इत्यारभ्यैवास्ति । पत्रमेकं नष्टम् ।

यदि गुरुरुच्चस्थाने लग्नगतो भवति चन्द्रसंयुक्तः ।
[1]प्रीतिश्चतुष्पदानां लाभं पक्षेण सञ्जनयेत् ॥४॥

इति [2]कृष्णीय[3]शास्त्रे [4]त्रयोविंशोऽध्यायः ॥

---

## अथ चतुर्विंशोऽध्यायः

*[5]आद्ये च सम्प्रयच्छति [6]सुमनस्त्रीगन्धभक्ष्यरूपाणि ।
[7]उडुपतिरनभायोगे कलहं नृगृहे विलग्ने वा ॥१॥

---

बुधलग्ने बन्धुसुतनाशम् । अत्यन्तं बलहीनस्य ग्रहस्य फलमेतत् । नीचशत्रुक्षेत्रमूढगतस्येत्यर्थः ॥३॥

यदि गुरुः जीव उच्चे कर्कटकलग्नगतो लग्ने भवति, न केवलं चन्द्रयुतो भवति यदा तदा सर्वेभ्यः प्रीतिर्भविष्यति । तस्मिन् योगे चतुष्पदानां पक्षेण यूथेन सञ्जनयेत् [1]लाभो भवति ॥४॥

[इति कृष्णीयव्याख्यायां चतुरसुन्दर्यां त्रयोविंशोऽध्यायः]

अनभायोगफलमुच्यते—शुभानभायुक्ते चन्द्रे उदयराशिं पञ्चधा कृत्वा प्रथमभागोदये सुमनः, द्वितीयभागोदये स्त्रीलाभं, तृतीये चन्दनादिलाभं गन्धस्य वा, चतुर्थे ताम्बूलक्रमुकफलादिभक्ष्यलाभं, पञ्चमे रूपं सुन्दरवस्तुलाभं, दर्शनमथवा वदेत् । नृगृहे पुरुषराशौ चन्द्रे स्थिते वा लग्ने वा कलहमेव भवति । पापग्रहानभायामपि कलहं पूर्वोक्तलाभानामपि हानिश्च भवति । आरूढेनापि वदेत् ॥१॥

---

१ 'ति चतु' ख, ग, ङ, ज, ञ, ट, ठ, द. २ 'णि सप्तदशोऽध्यायः' ग. ३ 'ये सप्तदशोऽध्यायः' प. ४ 'स्त्र सप्तदशोऽध्यायः' द. ५ 'अद्यैव सं' ख, ग, घ, च, छ, ञ, ध, न, फ. ६ 'युवतिस्त्रीगन्धपुष्पमाल्यानि' ख. ७ 'हे तु ल' ख, घ, ङ, च, ज t() ट, न, फ.

---

1 'ति । इति कृष्णीयशास्त्रव्याख्यायां चतुरसुन्दर्याख्यायां सप्तदशोऽध्यायः' ज.

---

* बपाठे एतदादीनि चत्वारि पद्यानि न सन्ति ।

स्त्रीराशिषु भृगुशशिनोर्होरायां[1] पृच्छतीषु नारीषु ।
नार्या लाभो वाच्यो दास्या नीचस्थयोर्लाभः[2] ॥२॥

यदि पापयुतौ स्यातां[3] कुरुतोऽस्त्रायासमङ्गनानाशम्[4] ।
नृगृहेष्वर्कारयमा मित्रविरोधस्य कर्त्तारः ॥३॥

यद्येतौ सौम्ययुतौ लग्ने कुरुतोऽत्र युवतिधनलाभम् ।
सौरस्त्रिकोणयुक्तः[5] सुतमरणं चोरवीक्षां च ॥४॥

होराद्वादशराशौ षष्ठे वा भवति बन्धनं रविजे ।
भौमे रुधिरं सूर्ये युद्धं चन्द्रे तु विस्फोटम्[6]* ॥५॥

युग्मराशिषु स्थितयोः स्वहोरास्थितयोः[1] शुक्रचन्द्रयोरन्यतमस्योदये यदि नारीषु पृच्छतीषु मैथुनं वा लाभं वा पृच्छति चेत्तत्प्रष्टुर्वदेत् । यदि स्वनीचस्थयोरुदयगतयोर्दास्या लाभो भवति । एवं सन्ततिप्रश्ने पुरुषग्रहराशिवशात् पुत्रलाभो भवति ॥२॥

चन्द्रशुक्रौ पापयुतौ उदयगतौ स्त्रीरोगं स्त्रीमरणं वा कुरुतः । आदित्यकुजमन्दाः एकतः प्रथमाद्योजराशिगताः मित्रेषु विरोधकर्तारो भवन्ति ॥३॥

एतौ चन्द्रशुक्रौ शुभग्रहयुतौ लग्नगतौ युवतिस्त्रीलाभं युवतिदृश्यलाभं वस्त्रपुष्पादिलाभं कुरुतः । सौरः पापयुतस्त्रिकोणे पञ्चमे स्थितः पुत्रमरणं करोति । अथवा चोरदर्शनं वा वदेत् ॥४॥

लग्नादारूढाद्वा द्वादशभवने षष्ठराशौ वा रविजे स्थिते बन्धनं वदेत् । चरस्थिरो-

१ 'तीष्टयुवतीषु' ख. २ 'योस्तद्वत्' ख. ३ 'तेऽत्रा' ख, घ, ठ, द. ४ 'शं च' ख. ५ 'तरोगं चो' क, ग to फ. ६ 'विट्स्पर्शम्' क, ग to फ.

1 'रायां चन्द्रहोरास्थि' क.

* एतदनन्तरं ग ज ञ ट ठ म ब पाठेषु पद्यमिदमधिकं वर्ततेऽल्पाल्पभेदेन—
मतृवियोगनिरोधौ चन्द्रे क्रूरेऽपि वा तत्स्थे ।
विफलन्त्येते क्रूरास्सौम्येक्षणसम्प्रयोगाभ्याम् ॥

चन्द्रेण गुरुर्लग्ने वरिष्ठभोगार्थयुवतिलाभकरः ।
गोरसबहुळं भुक्तं[1] वार्ताद्या श्रूयते चेष्टा[2] ॥६॥

भोजनमुदारमम्बरलाभं विख्यातकुलजसम्पर्कम् ।
शुक्रः कुरुते सौम्यो विजयं विद्यां विवादं च ॥७॥

स्थानचतुष्पान्नाशं[3] नेत्रविकाराङ्गरोगविच्छायाः[4] ।
वदतीन्दुनोष्णकिरणः स्त्रीगुह्यस्पर्शनं चैव ॥८॥

---

भयराशिवशाद् दूराद्दूरपथिषु निर्दिशेत् । तयोरेकत्र भौमे स्थिते रुधिरविकाररोगो भवति । एवं सूर्ये युद्धं भवति । क्षीणचन्द्रे स्थिते मसूरिकादिरोगो भवति । एते ग्रहाः शुभवीक्षिताः उक्तफलाभावं कुर्युः । न भवतीत्यर्थः । एते पापग्रहाः शुभवीक्षणयुता वा पापफलं न कुर्युः । यदि पापग्रहाः बलवन्तः स्वल्पमशुभं कुर्युः ॥५॥

चन्द्रेण सह लग्नगतस्य ग्रहस्य फलमुच्यते—सचन्द्रे गुरौ लग्नगते उदितराशिद्रेक्काणक्रमेण वरिष्ठभोगं वरिष्ठार्थं वरिष्ठयुवतिः मुख्यस्त्री एतेषां लाभं वदेत् । तेनैवोदयेन भुक्तौ गोरसबहुळं च इष्टवार्तां च इष्टकथां च वदेत् । आदिशब्देन श्रवणदर्शनलाभादीन् वदेत् ॥६॥

सचन्द्रे शुक्रे लग्ने द्रेक्काणक्रमान्मृष्टभोजनमम्बरलाभः प्रसिद्धकुलजसम्बन्धः एतानि वदेत् । कुरुते—बुधः सचन्द्रः विजयं च विद्यां च विवादं च कुरुते । विवादं तार्किकम् ॥७॥

स्थानेति । चन्द्रेण सह आदित्य उदितश्चेत् उदितभागक्रमेण स्थाननाशं चतुष्पान्नाशं नेत्ररोगं अङ्गरोगं विच्छायां च वदेत् । स्त्रीगुह्यस्पर्शनं च वदेत् । विच्छाया विगतच्छाया ॥८॥

---

१ 'भुङ्क्ते' घ, च, ञ. २ 'तेऽभीष्टा' ठ, प. ३ 'तुष्पदना' क, ख, ग, छ, झ. ४ 'हृच्छूलाः' ख; 'विच्छायं' ब.

यद्यत्रैव बुधः स्यात् प्रष्टारं पारदारिकं विद्यात् ।
चलचित्तमर्थलुब्धं परपरिवादे च नित्यरतम् ॥९॥

शशिवेश्मनि रविलग्ने सन्तापोद्वेगनिर्गमायासाः[१] ।
चोरभयरुधिरबन्धनसुवर्णनाशं च कुजलग्ने ॥१०॥

उत्तमपुरुषः प्रष्टा गुरुलग्ने स्थानमानलाभोऽस्य ।
उशना शशिगृहलग्ने करोति नारीगतां चिन्ताम् ॥११॥

स्थानभ्रंशं व्याधिं बन्धं रोधं निकर्तनं च तनोः ।
सुहृदां निवृत्तिमार्किः करोति शश्यालये लग्ने ॥१२॥

---

यदीति । अत्रैव रविचन्द्रयुते लग्ने बुधयुक्ते सति पूर्वोक्तफलानि च इहोक्तफलानि वदेत् । प्रष्टा पारदारिकः चलचित्तः द्रव्येष्वतिलुब्धः परपरिवादे च नित्यरतिः ॥९॥

शशीति । शशिगृहे कर्कटके लग्नगते ग्रहयुते फलमुच्यते—यावन्ति फलानि गृहस्योक्तानि तावन्ति तल्लग्नभागानि[1] कृत्वा एकैकस्य एकैकक्रमाद्वदेत् । अतः कर्कटके रवियुते लग्नगते मनस्सन्तापः, उद्वेगः, निर्गमो यात्रा, आयासो रोगः एते भवन्ति । कर्कटके सकुजे चोरभयं रुधिरस्रावं बन्धनं सुवर्णनाशं च वदेत् ॥१०॥

उत्तमेति । कर्कटके गुरुयुते लग्नगते प्रष्टुरुत्तमशीलस्थानमानलाभादीन् वदेत् । शशिगृहे शुक्रयुते नारीचिन्ता वक्तव्या ॥११॥

स्थानभ्रंशमिति । कर्कटके सौरयुते लग्नगते राशिभागक्रमेण स्थानभ्रंशं व्याधिं बन्धं रोधं[2] शरीरनिकर्तनं प्रष्टुर्वदेत् ॥१२॥

---

१ 'सान्' ख, ग, झ, ठ, द, ध, प.

---

1 'कं श' ग, छ, झ. 2 'रागं' ग.

भौमगृहे शशिलग्ने व्याधिं शौक्रेऽर्थनाशमर्कगृहे ।

उत्कण्ठमायासं सौरे विद्याविनाशं च ॥१३॥

बन्धुजनार्थविनाशौ भार्यासम्पत्तिमृणमथायासम् ।
बौधे जैवे मैत्रीं शौर्यं चात्मालये कुर्यात् ॥१४॥

केशनखद्विजकक्षस्तनभुजनाभ्यूरुमूर्धभगचरणाः ।
ज्ञेयाः पुल्लिङ्गाख्याः क्षिप्रं पुत्रार्थलाभकराः ॥१५॥

ग्रीवाभ्रूनासाङ्गुलिजङ्घाहनुनाभिकर्णपाल्यश्च ।
पार्ष्णी[1] कट्यौ नार्योऽर्थदुहितृकृद्[3] दीर्घकालेन ॥१६॥

---

भौमेति । कुजक्षेत्रे मेषवृश्चिकयोरन्यतमे चन्द्रे लग्नगते व्याधिं वदेत् । शौक्रे वृषतुलयोरन्यतमे चन्द्रे स्थिते लग्नगते प्रष्टुरर्थनाशं वदेत् । अर्कगृहे सिंहे च सचन्द्रे लग्ने उत्कण्ठां वदेत् । सौरे मकरकुम्भयोरन्यतमे चन्द्रे लग्नगते रोगं च सर्वस्य चिन्तितस्य नाशं वदेत् ॥१३॥

बन्ध्विति । बौधे मिथुनकन्ययोरन्यतमे चन्द्रे लग्नगते बन्धुनाशमर्थनाशं भार्याया असम्पत्तिम् ऋणं आयासमेतानि वदेत् । जैवे धन्विमीनयोरन्यतमे चन्द्रे लग्नगते मैत्रीचिन्ता वक्तव्या । आत्मालये चन्द्रे स्वक्षेत्रे उदयगते आत्मशौर्यं वदेत् । ग्रहरहिते मेषादौ लग्नगते "मेषे नृपसेनापतीत्यादि"* ॥१४॥

केशेति । पुत्रप्रश्ने अर्थसिद्धौ वा केशाद्यङ्गस्पर्शे कृते तस्य प्रष्टुः पुत्रलाभमर्थसिद्धिं च वदेत् । अचिरेणेत्यर्थः ॥१५॥

ग्रीवेति । ग्रीवाद्यङ्गस्पर्शे कृते पुत्रिकालाभं स्त्रीकृतार्थसिद्धिं च दीर्घकालेन वदेत् ॥१६॥

---

१ 'कण्ठनमा' ख, ग, झ, ञ, ट, ठ, द, ध, प, ब. २ 'ष्णिकोडा ना' ख, ब.
३ 'तृग दी' ख to च, ज, ञ, ढ, फ.

---

* खपाठ अत्राध्यायसमाप्तिः ।

मुखपक्ष्ममेढ्रजानूदरपार्श्वशिरोललाटदेशास्तु ।

१

एते नपुंसकाख्याश्चामर्शे निष्फलाः प्रोक्ताः ॥१७॥

*यदि परिमृशन् स्ववक्षः पृच्छेत्तस्याग्रतो भवति लाभः ।

२

अन्यत्र निम्नदेशस्पर्शे हानिं वदेत्तस्य ॥१८॥

३ ४ ५

इति कृष्णीयशास्त्रे चतुर्विशोऽध्यायः ॥

---

मुखाद्यङ्गस्पर्शेन प्रष्टुः कृते पुत्रप्रश्ने नपुंसकलाभं च अन्यकार्याणां निष्फलत्वं च वदेत् । न सिध्यतीत्यर्थः ॥१७॥

यदि प्रष्टा स्वोरःप्रदेशं परिमृशन् पृच्छेत् तस्य प्राप्तं चिन्तितस्य लाभं वदेत् । अत्र [ये स्थाना नोक्ताः ? यानि स्थानानि नोक्तानि] तेषु च गळगुदजान्वन्तरादिषु निम्नप्रदेशेष्वामर्शे द्रव्यसिद्धिं पुत्रसिद्धिं वा पृच्छति चेद् द्रव्यहानिं सन्तानहानिं च

1

वदेत् ॥१८॥

[इति कृष्णीयव्याख्यायां चतुरसुन्दर्यां चतुर्विशोऽध्यायः ।]

---

१ 'ख्याः पुत्रार्थे नि' ख. २ 'स्य ॥ षोडशोऽध्यायः' ट. ३ 'ति अष्टादशोऽध्यायः' ग. ४ 'ये विंशोऽध्यायः' झ; 'येऽष्टादशोऽध्यायः' प. ५ 'स्त्रेऽष्टादशोऽध्यायः' ठ, द.

---

1 'त् ॥ इति कृष्णीयशास्त्रव्याख्यायां चतुरसुन्दर्याख्यायामष्टादशोऽध्यायः' ज.

---

* बपाठे पद्यमिदं नास्ति ।

## अथ पञ्चविंशोऽध्यायः

केन्द्रे ग्रहेऽरिराशावम्बरमध्येऽथवा[1] भवेत् क्रूरः ।
द्रव्यं हृतमिति विद्याद्राश्यवसाने ग्रहे युक्ते[2] ॥१॥

भौमर्क्षे कुजदृष्टे ताम्रं शुक्रार्कसौरिश[3]तगुभिः ।
कांस्यं बुधेन दृष्टे जीवे कनकं वदेन्नियतम् ॥२॥

भौमे बुधेन वज्रं कनकं सूर्ये भृगौ मणिर्ज्ञेयः ।
काचं निशाकरे स्याद्देवगुरौ बहुविधं लोहम् ॥३॥

---

नष्टप्रश्ने उदयारूढचन्द्राणामेकतमस्यापि केन्द्रराशावरिराशौ कश्चिद् ग्रहः तिष्ठति चेद् नष्टचिन्ता वक्तव्या । अथवा दशमस्थाने कश्चित् क्रूरग्रहस्तिष्ठति चेत् तदेव । यस्य राशौ कर्कटकवृश्चिकमीननवांशकेष्वेकत्र क(स्मि)श्चिद् ग्रहे युक्ते यद् द्रव्यं नष्टं तद् हृतमिति विद्यात् । चोराहृतमित्यर्थः ॥१॥

नष्टप्रश्ने धातुत्वे पूर्वोक्तलक्षणैर्निश्चयिते धातुविशेषः कथ्यते भौमर्क्ष इति[1] । ऋक्षशब्देन नवांशक उच्यते । मेषवृश्चिकनवांशकयोरन्यतरस्योदये कुजेन दृष्टे ताम्रम् । तस्मिन्नेव भौमनवांशे शुक्रार्कशनैश्चरचन्द्रैर्दृष्टे कांस्यं भवति । बुधेन दृष्टे कनकम् । जीवेन दृष्टे शुद्धकनकम् ॥२॥

लग्नगते भौमे बुधेन दृष्टे वज्रम् । सूर्येण कनकम् । भृगुणा माणिक्यम् । शशिना काचम् । गुरुणा बहुविधं मणिरत्नलोहम् । श[शि ? नि]ना आयसम् ॥३॥

---

१ 'ध्ये तथा भ' ख. २ 'हैर्यु' क, ख, ग, ङ, ज, ट, ठ, द, ध, प, ब.
३ 'सौरशी' ख, ङ, च, ठ, द, न, प, फ.

---

1 'ति । भौमनवांशकग्रहणमुच्यते । मेषे वृश्चि' ख, ज; 'ति । नवांशक उ' च; 'ति । भौमनवांशक उ' छ, झ, ञ.

*ग्रीवाभरणं सूर्ये शुक्रर्क्षे हस्तभूषणं शुक्रे ।
भाजनमिन्दोः कांस्यं कार्षापणमिन्दुजोर्वीजौ ।।४।।

स्त्रीपुरुषावपि सौरे सौम्यर्क्षे कांस्यभाजनं शुक्रे ।
भुजभूषणाङ्गुळीये बुधः कुजो हस्तभूषणकृत् ।।५।।

वेष्टनमिन्दोर्वाच्यं सूर्ये शृङ्गोद्भवं वदेन्नष्टम् ।
उरगार्कजसंयुक्ते सूर्ये नारीनरौ नष्टौ ।।६।।

बुधशशिशुक्रा रजतं चन्द्रगृहे काचवज्रकांस्यानि ।
भौमः कुरुते सूर्यस्ताम्रं सम्पादयेन्नष्टम् ।।७।।

लोहद्वयमिन्दुसुतः सूर्यर्क्षे[1] चन्द्रभास्करौ कनकम् ।
ग्रैवेयकमवनिसुतो हस्त्यश्वौ शुक्रदेवगुरू ।।८।।

शुक्रांशके सूर्येण दृष्टे उदयगते ग्रीवाभरणं भवति । शुक्रदृष्टे हस्तभूषणम् । चन्द्रदृष्टे कांस्यभाजनम् । इन्दुजोर्वीजौ शुद्धसुवर्णम् । गुरुराहुभ्यां भौमांशकोक्तं वदेत् । उदयगते शुक्रेऽप्येवं वदेत् ।।४।।

जीवचिन्तां ज्ञात्वा बुधनवांशके लग्नगते सौरदृष्टे स्त्रीपुरुषौ नष्टौ । शुक्रदृष्टे कांस्यभाजनम् । भुजभूषणमङ्गुळीयं वा बुधः । कुजोऽपि हस्तभूषणम् ।।५।।

उदयगतं बुधांशकं वीक्षितस्य चन्द्रस्य चेद् वेष्टनं भवति । वेष्टनं नाम कर्णाभरणविशेषः । सूर्यदृष्टे शृङ्गोद्भवम् । तेन रचितं नष्टमिति वदेत् । तमेवांशकं राहुशनियुते सूर्ये पश्यति तदा नारीनरौ नष्टौ भवतः ।।६।।

लग्ने चन्द्रांशके उदिते बुधशशिशुक्रैः समस्तैर्दृष्टे रजतं काचं वज्रं कांस्यमेतानि कुजस्य । सूर्यस्ताम्रं सम्पादयेत् ।।७।।

सूर्यांशके लग्नगते बुधदृष्टे लोहद्वयं भवति । दीपभाजनादि लोहद्वयम् । चन्द्रभास्करौ कनकम् । अवनिसुतो ग्रीवाभरणम् । शुक्रजीवौ हस्त्यश्वौ ।।८।।

१ 'सूर्यऽर्क्षे' ख.

* ङ पाठे 'स्त्रीपुरुषा' विति पञ्चमपद्यानन्तरमिदं पद्यं दृश्यते ।

ताम्रायसरूप्याणि च कनकं[1] सूर्यबुधजीवरुधिराङ्गाः ।
काचकृतौ[2] शशिशुक्रावायसमार्किर्यमर्क्षगतः[3] ॥९॥

यस्मिन् भवने नोक्तं तस्मिन् कनकं बृहस्पतौ[4] वाच्यम् ।
आयसमर्कापत्ये नोक्ते धातौ भवत्येव ॥१०॥

इन्दुं पश्यति भौमे नष्टं भूमौ तदादिशेद्धीरः[5] ।
धात्वादिभाजनेष्वपि नष्टं विद्याददृष्टश्चेत्* ॥११॥

---

शनैश्चरांशके लग्नगते सूर्यदृष्टे ताम्रं भवति । बुधदृष्टे शुद्धायसम् । जीवदृष्टे शुद्धरूप्यम् । भौमदृष्टे सुवर्णम् । शशिशुक्रदृष्टे काचकृतौ । शनैश्चरदृष्टे चायसम् । एके आचार्या भौमर्क्ष इति राशिग्रहणं वदन्ति ॥९॥

यस्मिन् राशावंशके वा उदिते गुरुदर्शने फलं नोक्तं तस्मिन् सर्वत्र सुवर्णं भवति । तथैव शनैश्चरस्यायसम् । धातुचिन्तायां नष्टे एतानि धातूनि गृह्णीयात् । यस्मिन् भवने नोक्तमिति । जीवभवने जीवांशे वा लग्नगते ग्रहदृष्टेऽप्यदृष्टे वा धातौ नष्टे सति कनकमेव वदेत् । उक्तांशके बहुग्रहदर्शिते बलवतो वक्तव्यम् । बलसाम्ये समुच्चयो वक्तव्यः । येन ग्रहेण यन्नष्टनिर्णयः कृतः तेनैव नष्टस्य कालनिश्चयोऽपि कार्यः । तद्ग्रहस्थितराशिवशाद् अंशकवशाद्वा नष्टराशिनिश्चयश्च कार्यः ॥१०॥

भौमे इन्दुं पश्यति सति नष्टं भूमौ निहितमिति वदेत् । सूर्योऽपि भौमवत् । शुक्रे जले, बुधे भूमौ, जीवे आकाशे लम्बमानं, शनौ वायुस्पर्शे । एवमारूढवशाच्चोराहृतकाले द्रव्यस्थितप्रदेशं वदेत् । चन्द्रेणैव पश्चात्स्थितस्थानमपि वदेत् । शशी ग्रहादृष्टश्चेत्

---

१ 'कं रविसौम्यजी' ख, छ, ञ, ट, ड, ढ, ण. २ 'कांस्यकृ' ङ,. ३ 'क्रौ लोहकृतं शनिगृहे रविजे' ॥ ख. ४ 'स्पतेर्वा' ख, ग, ज, ठ, द, ध, प, ब. ५ 'शेद्धीमान्' ख; 'शेद्विद्वान्' ग, ब, ठ, द, ध, प.

---

* अयं व्याख्यानुसारी पाठः घ च ध न फ पाठेष्वेव वर्तते । 'ददृश्यश्चेत्' इत्यन्यत्र पाठः ।

स्थालीकुम्भोदञ्चनघटिकासंभिन्नभाजनाम्बुधराः ।

रविजीवभौमबुधभृगुसौरेन्दूनां च पात्राणि ॥१२॥

मूलादेशे वस्त्राणि यानि तान्येव चेह वाच्यानि ।

जलराशावशुभयुते तैलं सर्पिः शुभैरबुधैः ॥१३॥

जातिफल[1]कटुकचन्दनतमालतक्कोलकुष्ठधन्वाषाः[2] ।

आदित्यसौरभार्गवबुधगुरुशशिलोहिताः क्रमशः[3] ॥१४॥

इति कृष्णीयशास्त्रे पञ्चविंशोऽध्यायः ।

धात्वादि चन्द्रस्थितराशिवशाद् भाजने न्यस्तं वदेत् । धातुराशिस्थितश्चेद्धातुभाजने न्यस्तं नष्टम् । मूलराशिगतश्चेन्मूलभाजने । जीवराशिस्थितश्चेत् कृत्रिमजीवभाजने वदेत् ॥११॥

सूर्यस्य कडारादि बृहत् पात्रम् । गुरोः कलशाकृतिः कुम्भः । कुजस्य उदञ्चनं हस्तचषकादि । बुधस्य घटिका । शुक्रस्य सम्भिन्नं भग्नयुक्तम् । मन्दस्य भूकृतं भाजनम् । चन्द्रस्याम्बुपात्रम् । नष्टप्रश्ने भाजने निश्चयिते यो ग्रहो लग्नं पश्यति उक्तप्रकारेण वदेत् । तत्र गृहे चोरप्रदेशं "वीक्षेते रविभौमा"वित्यत्रोक्तं वदेत् । उदय यावन्तः पापग्रहाः पश्यन्ति तावन्तश्चोरा भवन्ति ॥१२॥

मूलचिन्तायां द्रेक्काणवशाद्यानि वस्त्रविशेषाण्युक्तानि तान्येव नष्टे वदेत् । तैलादिनष्टप्रश्ने तन्निश्चयिते जलराश्युदये पापदृष्टे तैलं भवति । तस्मिन्नेव बुधरहितैः शुभैर्दृष्टे घृतम् । बुधस्य सुरा । शशिवशात्तैलघृतभाजनं वदेत् ॥१३॥

मूले नष्टे पूर्वोक्तलक्षणैस्तद्विशेषं वदेत् । औषधविशेषे सति जातिफलं सूर्यस्य । कटुकरोहिणी सौरस्य । चन्दनं शुक्रस्य । तमालं बुधस्य । तक्कोलं गुरोः । कुष्ठं चन्द्रस्य । धन्वाषः कुजस्य । एतानि गन्धद्रव्याणि विमृश्यान्यानि च स्वादुना गन्धेन च वदेत् । उच्चगतग्रहकारणाद्वदेत् ॥१४॥

[इति कृष्णीयव्याख्यायां चतुरसुन्दर्यां पञ्चविंशोऽध्यायः]

---

१ 'तीफ' क, ख, ग, घ, ज, त, प, फ. २ 'धान्यानाम् ।' ख. ३ 'शः ॥ नष्टामुष्टि समाप्तम् ।' ट.

अथ षड्विंशोऽध्यायः

गुरुदृष्टे भृगुराशौ मधु शीथु रवौ प्रसन्नमुडुपतिना ।
कर्तनशालिकमुशना वर्तिसुरा भौमसन्दृष्टे* ॥१॥

£भुजगशनैश्चरदृष्टे भवति विनष्टा रसेन दुर्गन्धा[१] ।
बुधदृष्टे हरितसुरा नोक्तास्तूह्या रसाद्येन ॥२॥

ह्रस्वविषाणो[२] भौमे मुण्डश्चन्द्रे गुरौ सिते दीर्घः[३] ।
सङ्कटविशालशृङ्गो रविबुधयोर्भग्नशृङ्कोऽर्कसुते ॥३॥

अथ मध्वादिपानवारुणीविशेष उच्यते—शुक्रक्षेत्रोदये येन केन शुक्रदृष्ट्या मधुपानचिन्ता वक्तव्या। तस्मिन् क्षेत्रे गुरुदृष्टे मधु नष्टम् । सूर्यदृष्टे शीथु । शशिना प्रसन्नं मधु । शुक्रदृष्टे कर्तनशालिकम् । भौमदृष्टे वर्तिसुरा ॥१॥

तस्मिन्नेव शुक्रक्षेत्रे राहुणा शनैश्चरेण वा दृष्टे रसेन हीना दुर्गन्धयुता सुरा विनष्टा भवति । तस्मिन्नेव बुधदृष्टे हरितसुरा । ये[1] मद्यविशेषा नोक्तास्ते रसगन्धदोषैरनुमेयाः ॥२॥

अथ चतुष्पात्त्वे निश्चिते जीवयोनौ शृङ्गविशेषनिर्णय उच्यते—लग्ने भौमदृष्टे किञ्चिदुन्नतविषाणः । चन्द्रेक्षिते मुण्डशृङ्गः । गुरुशुक्रवीक्षिते दीर्घशृङ्गः । रविवीक्षिते सङ्कटशृङ्गः । बुधवीक्षिते विशालशृङ्गः । शनिराहुवीक्षिते भग्नशृङ्गः । उत्पाटितशृङ्ग इत्यर्थः । चतुष्पात्प्रश्ने येन ग्रहेण उक्तलक्षणं लक्ष्यते तेनैव वर्णव्रणादीन् वदेत् ॥३॥

१ 'न्धाः ।' ख, ग, ज,ट, ठ, द, ध, प. २ 'णं भौ' ख. ३ 'र्घम् ।' क to घ, च, ज, ठ, द.

1 'ये नोक्ताः रस' ख, ज.

*ङपाठे एतत्पद्यानन्तरमेतदध्यायगपञ्चमपद्यं लिखितमस्ति ।

£ पद्यमिदं बपाठे नास्ति ।

*क्रूरः क्रूरं पश्येन्नष्टं शुभवीक्षणेन तल्लभते ।

यदि वीक्षते[1] शुभर्क्षं सौम्यो निस्संशयो लाभः ॥४॥

£प्रष्टुर्नष्टं द्रव्यं वदेत् स्वदिक्स्थे ग्रहे स्थितं तत्र ।

भवनग्रहाश्रयेणोच्चनीचारिमित्र[2]धनमूह्यम् ॥५॥

$विभ्रमति चरविलग्ने स्थिरराशौ तत्र निर्दिशेद् द्रव्यम् ।
द्विशरीरे प्रतिवेशमन्यथवा ग्रामे गृहे स्वदिशि‡ ॥६॥

---

अनेन नष्टस्य लाभालाभमुच्यते—क्रूरराशिस्थितमुदयगतं पापग्रहं पापग्रहः पश्येद्यदि तदा लाभो नास्ति । यदि तमेव पापग्रहं शुभग्रहो बलवान् वीक्षेत्तदार्धलाभो भवति । अथवा तस्य प्रतिनिधिर्वा सिध्यति । चिरकालादुदयगतं शुभग्रहः पश्यति चेत्तदा अद्यैव लाभो भवति । उदये शुभे सति बलवत्पापदर्शनेन नश्यत इति वक्तव्यम् । लाभकालः पूर्वोक्त एव । उदयसप्तमराशिवशान्नष्टस्य[1] दर्शनं वदेत् । तत्र स्थितं द्रव्यं द्रव्यविशेषाश्च पूर्वं धातुमूलजीवचिन्तायामुक्ताः तानपीह वदेत्[2]† ॥४॥

यो ग्रहो लग्नं पश्यति स स्वराशिस्वांशगतश्चेत् नष्टं द्रव्यं तत्रैवास्तीति वदेत् । भवनेनाश्रयग्रहेण वा स एव ग्रहः स्वोच्चनीचसुहृच्छत्रुजनानां द्रव्यमिति वदेत् ॥५॥

चरराश्युदये नष्टं पृच्छति तदा सञ्चरति द्रव्यम् । स्थिरराश्युदिते तत्र गृहे

---

१ 'क्षिते शुभर्क्षे सौम्ये निस्संशयं ला' ख, ङ. २ 'चरिपुमित्रध' ख, ठ.

---

1 'ष्टद्रव्यं नष्टमिति वदेत् । स्वदिक्स्थे ग्रहेऽत्र भवनग्रहाश्रयणोच्चनीचारिमित्रधनमूह्यम्' क, ख, ङ, च. 2 'त् ॥ स्वदिक्स्थे ग्रहे तमेव भवनग्रहाश्रयेणोच्चनोचारिमित्रधनमूह्यम् । यो ग्रहो ल' ङ, ख.

---

* इदं पद्यं ग ठ प पाठेषु नास्ति । † इतः परं अपाठो नास्ति । £ इदं पद्यं क च न फ ब पाठेषु नास्ति । $ पद्यमिद च ब पाठयोर्नास्ति । ‡ एतदनन्तरम्—

''दिक्स्थेषु ग्रहराशिषु हिबुकस्य ग्रहाश्रितैर्ग्रहैर्वापि ।
नष्टं स्वगृहे वाच्यं गेहासन्ने तदासन्ने ॥'' इति पद्यं गजठदधपपाठेषु दृश्यते ।

द्रव्यं गृहादतीतं राशिमुखे द्वार उच्यते लग्ने ।
मध्ये गृहमध्ये स्यादवसानेऽन्त्ये गृहे द्रव्यम्* ॥७॥

१
£नवनवगृहप्रदेशे स्थितनवभागैर्द्विषड्भिदोपेतैः ।
बलवच्छुभसंयुक्तैः द्रव्यद्वारं वदेत् केन्द्रैः ॥८॥

२
योजनहस्तक्रोशा वाच्या मध्याच्च्युतैर्ग्रहैर्नीचैः ।
अंशैस्त्रिंशद्भागैर्द्वादशभागैरतीतेषु ॥९॥†

स्थितम् । उभयोदये गृहाद्बहिः प्रतिवेश्मनि वदेद् द्रव्यम् । अथवा ग्रामे गृहे वा अन्वेष्यम् । स्वदिशि । बलवति लग्ने राशेर्दिशि द्रव्यं वदेत् । बलरहिते वीक्षणग्रहस्य या दिक् सा वक्तव्या ॥६॥

लग्ने प्रथमद्रेक्काणे द्रव्यं गृहादतीतं चोरगृहद्वारगतम् । मध्यद्रेक्काणे चोरगृहमध्यगतम् । अन्त्यद्रेक्काणे गृहमतीत्य पश्चाद्भागे न्यस्तमिति वदेत् । यो ग्रहः चोरकर्ता तेन स्थितद्रेक्काणवशादन्ये वदन्ति ॥७॥



नष्टद्रव्यं गृहे स्थितमिति नि[श्चयित्वा ? श्चित्य] गृहप्रदेशमेकाशीतिपदं कृत्वा तस्मिन् द्वादशराशीन् विन्यस्य यस्मिन् राशौ यतमेंऽशे बलवान् शुभग्रहस्तिष्ठति तत्र द्रव्यमिति वदेत् । अथवा केन्द्रगतानां राशीनां यो राशिः शुभयुतः तत्र द्रव्यं वदेत् । केन्द्रे नष्टद्रव्यस्थितस्य गृहस्य द्वारं केन्द्रगतस्य ग्रहस्यातिवीर्यस्य या दिक् तस्यां दिशि वक्तव्यम् ॥८॥

नष्टद्रव्ये दूरगते निश्चयिते नवमाष्टमसप्तमस्थैरशुभग्रहैर्भुक्तनवांशकैस्त्रिंशांशकद्वादशांशकैश्च एतावद्देशमतीत्य स्थितं नष्टद्रव्यमिति वदेत् । एकत्र बहवो भवन्ति यदा तदा पृथक् पृथक् योजनादि गृह्णीयात् । गणना कर्तव्या । एवं चरलग्ने । स्थिरलग्ने द्रव्यस्थिरत्वे निश्चयिते सति किष्कवङ्गुलयवाः । उभयराशिलग्नेऽथवा प्रतिवेश्मनि नष्टद्रव्ये निश्चयिते तैरशुभैः गव्यूतिकिष्कवङ्गुलयवा वाच्याः ॥९॥

१ 'हे प्र' ब. २ 'घ्यस्थितैर्ग्र' ख.

* बपाठे इतः परं २७ तमाध्यायपर्यन्तं नास्ति । £ पद्यमिदं व च न फ पाठेषु नास्ति । † इतोऽनन्तरं नकपाठयोः सप्तविंशाध्याये ६ तमपद्यादारभ्यैव वर्तते ।

*गोष्ठागारपुरोहितदेवागारेषु सुरगुरौ[1] वाच्यम् ।
व्रतवन्नारीणां वा गृहेषु नष्टं विनिर्देश्यम् ॥१०॥

शय्योद्यान[2]जलाशयलळितस्त्रीगन्धमाल्यनिलयेषु ।
शुक्रे कुजेऽग्निनिलये कर्मार[3]गृहे वदेन्नष्टम् ॥११॥

यत्र प्रतिनिवसन्ति प्रमदाः कलहप्रिया वयोमध्याः ।
तत्रादेश्यं नष्टं निलयद्वारेऽथवा सूर्ये ॥१२॥

चन्द्रे सलिलाभ्याशे जलेऽथवा नष्टमादिशेत् सततम् ।
अथवा यत्र सुवेषा विदग्धनार्यो भवन्त्यत्र ॥१३॥

निवसन्ति यत्र नार्यो यौवनवेषाङ्गरूपसम्पन्नाः ।
तासां गृहमध्यगतं सौम्ये नष्टं समादेश्यम् ॥१४॥

---

गुरुदर्शने लग्नं चतुर्धा कृत्वा क्रमाद् गोष्ठागारादि चत्वारि स्थानानि वक्तव्यानि ॥१०॥

शुक्रदर्शने लग्नं षोढा विभज्य क्रमेण शय्यास्थानम् उद्यानं जलाशयस्थानं सुभगस्त्रीगृहं गन्धालयं माल्यालयं च वक्तव्यानि । कुजदर्शने लग्नं द्विधा कृत्वा अग्निनिलये कर्मकारादिधातुकारादिगृहे वक्तव्यम् ॥११॥

आदित्यदर्शने कलहस्त्रीगृहे गृहद्वारे च वक्तव्यम् ॥१२॥

चन्द्रदर्शने लग्नं त्रिधा कृत्वा यथार्हं वक्तव्यम् ॥१३॥

सौम्यदृष्टे बहुनारीगृहे नष्टं वक्तव्यम् ॥१४॥

---

१ 'गुरोर्वा' ख; 'गुरौ ज्ञेयम्' ग, ज, ठ, ड, ध, प. २ 'ननदीबयलळि' ख.
३ 'गृहेषु वा वाच्यम्' ॥ ख.

---

* इत आरभ्य 'षष्ठे चोर' (२७–६) पर्यन्तं खचपाठयोर्नास्ति ।

कलहप्रियाश्च पिशुना वृद्धा वा यत्र योषितः सौरे ।
जीर्णोदस्करभाण्डेषु कर्दमे वा विनिर्देश्यम् ॥१५॥

श्वभ्राश्रितं दृगाणं सूर्यः[१] पश्येत् समग्रबलवीर्यः ।
विबलौ यदीन्दुशुक्रौ श्वभ्रस्थाने वदेन्नष्टम्[२] ॥१६॥*

इति[३] कृष्णीयशास्त्रे षड्विंशोऽध्यायः ।

## अथ सप्तविंशोऽध्यायः

स्थिरराश्यंशकलग्ने[४] मध्ये वर्गांशकेऽपि वा लग्ने ।
नष्टं स्वगृहे ब्रूयात्तस्य[५] स्वामी भवेच्चोरः ॥१॥

---

शनैश्चरदर्शने लग्नं त्रिधा कृत्वा यथास्थानं जीर्णोपस्करादिभाजनेषु न्यस्तं नष्टमिति वदेत् ॥१५॥

श्वभ्रशब्देन नगरसमीपमुच्यते । इन्दुशुक्रौ बलिनौ चेत्तत्रैव जले वदेन्नष्टम् ॥१६॥

[इति कृष्णीयव्याख्यायां चतुरसुन्दर्यां षड्विंशोऽध्यायः]

---

स्थिरराश्युदये स्थिरराश्यंशोदये वा दशमगतग्रहांशोदये वा वर्गोत्तमांशोदये वा नष्टद्रव्यं स्वगृहे वदेत् । द्रव्यस्वामी तस्य सम्बन्धी वा चोरो भवति ॥१॥

---

१ 'लयुक्तः' ख. २ 'ष्टम् । द्रव्याश्रयदेशनिर्णयम्' ङ; 'द्रव्याश्रितः समाप्तः' ज; 'एकविंशोऽध्यायः' ट. ३ 'ति द्रव्यनिर्णयस्समाप्तः' क, ड, ढ, ण; 'ति कृष्णीये एकविंशोऽध्यायः ।' झ. ४ 'शविलग्ने वर्गोत्तमसंस्थितेऽथवा ल' क, ख, ङ, झ, ट, ब. ५ 'त्तत्स्वामिवशाद्वदेच्चोरः' ख.

---

* इतः परं सप्तविंशाध्याये १८ तमपद्यपर्यन्तं व्याख्याखजपाठयोः पद्यानि व्याख्या च न सन्ति ।

चरराशावंशे वा प्रोषितमुदयेन सङ्गतं ब्रूयात् ।
बाह्योपगतस्तेनो यमळे[1] तु सहोषितश्चोरः ॥२॥

*द्रेक्काणो भवनादावुत्थित इति कीर्त्यतेऽन्त उपविष्टः ।
मध्ये शयितो ज्ञेयस्तेषु च भावास्तथा योज्याः ॥३॥

यादृग्भवति[2] बिलग्ने द्रेक्काणस्तादृशो भवेच्चोरः ।
केन्द्रगतो वा यादृग्ग्रहस्तु तादृग्विनिर्देश्यः ॥४॥

लग्ने ग्रहे स्वयं स्याद् दुश्चिक्ये भ्रातरं वदेच्चोरम् ।
हिबुके मातृस्वजनो माता वा पञ्चमेऽपत्यम् ॥५॥

---

चरराश्युदये चरांशोदये वा बहिश्चरश्चोरः द्रव्यं च । उदयगतग्रहांशोदयेऽपि बहिश्चरः । उदयराशिवशाद् दूरत्वं वदेत् । उभयराश्युदये तदंशोदये समीपोषितश्चोरः । द्रव्यं समीपस्थितम् ॥२॥

सर्वेषां राशीनां प्रथमद्रेक्काणः उत्तिष्ठति । मध्यमः शेते । उत्तरः आस्ते । अयं भावः—उदयद्रेक्काणवशाच्चोरो वक्तव्यः ॥३॥

उदये बलवति उद्यद्द्रेक्काणसदृशश्चोरः । उदये बलहीने केन्द्रगतबलवद्ग्रहसदृशाकृतिश्चोरः । केन्द्रे यावन्तो ग्रहा बलिनो भवन्ति तावन्तश्चोराः । गुणकाराश्च कर्तव्याः । यद्येको बलवान् तदा एक एव चोरः । सर्वे बलयुक्तास्तावत्संख्याश्चोराः ॥४॥

लग्नादिषु यस्मिन् भावे बलवद्ग्रहस्तिष्ठति तद्भावकश्चोरः । तत्रापि स्ववर्गे स्थिते स्वयमेव चोरः । लग्ने बलवद्ग्रहयुते स्वयमेव चोरः । द्वितीये कुटुम्बजनः । भ्रात्रादिषु परवर्गस्थे ग्रह एते । पूर्वाचार्या भौमर्क्ष इति राशिग्रहणं वदन्ति । भ्रात्रादिषु परवर्गस्थे ग्रहे तत्सम्बन्धिनश्चोराः । चतुर्थे स्ववर्गे माता । परवर्गस्थे मातृस्वजनः । पञ्चमे पुत्रः । परवर्गस्थे पुत्रस्वजनः ॥५॥

---

१ 'ळेषु स' ख, ग, ठ, द, प. २ 'भवति चो' ख.

---

* बपाठे पद्यमिदं नास्ति ।

षष्ठे चोरः शत्रुर्भार्या स्वजनोऽथवास्तमुपयाते[1] ।
नवमे पितैव चोरस्तत्स्वजनो वाऽथवा भवेद्धर्ता ॥६॥

नभसि क्रूराः प्रेष्याः कर्मकराः प्रेष्यजातयो नीचाः[2] ।
मेषूरणे तु सौम्ये कोशाध्यक्षेण तन्नीतम् ॥७॥

स्त्रीसंज्ञे वा लग्ने युग्मक्षेत्रेषु वा ग्रहा बहवः ।
चोरी[3] स्त्रीति ब्रूयादोजेषु[4] पुमान् ग्रहे पुंसि ॥८॥

नागरिकद्रेक्काणे नागरिको वीक्षते ग्रहः कश्चित् ।
चोरो नागरिकः स्याच्छेषैरपि चैवमूह्यन्ते ॥९॥



---

षष्ठे ग्रहे शत्रुश्चोरः । सप्तमे स्ववर्गस्थे ग्रहे भार्या । परवर्गस्थे तत्स्वजनः । अष्टमे केवलशत्रुः । नवमे पिता चोरः तत्स्वजनो वा ॥६॥

दशमे क्रूरग्रहे प्रेष्याः कर्मकराः । नीचस्थे ग्रहे नीचाः प्रेष्याः । लाभे तु न नष्टम् । द्वादशे नष्टस्य ना[शं ? शो] विद्यते, न लभ्यते ॥७॥

स्त्रीराशौ लग्नगते स्त्रीक्षेत्रे बहवो ग्रहास्तिष्ठन्ति चेत् चोरी स्त्री । स्त्रीराशौ स्त्रीग्रहदृष्टियुक्ते स्त्री । पुंसि लग्ने पुंराशौ बहुग्रहाः पुमांश्चोरः यथा चिन्तायामुक्तं तथा वक्तव्यः ॥८॥

नगरवासिद्रेक्काणे लग्ने नगरवासी ग्रहः पश्यति चेत् नागरिकश्चोरः । शेषैर्द्रेक्काणैर्ग्रहैरेवं निवासभूमिं वदेत् । जलनिवासिद्रेक्काणे जलग्रहदृष्टे वा जलनिवासकः । तथा आरण्ये तथा ग्रामे वासी । तथा देवगृहवासी । एवमेव विमृश्य वदेत् ॥९॥

---

१ 'सप्तमये' क, ख, घ, ङ, च, झ, न, फ, ब. २ 'चे' ख, ग, घ, ङ, च, ट, ध, प. ३ 'रः स्त्रो' ग. ४ 'याद्विषमेषु' ख.

[1]
*मनुजसमानाकारा द्रेक्काणास्तूत्तमा नरा ज्ञेयाः ।
वानरतुरगवराहाश्वमुखे सर्पाकृतौ त्वधमाः ।।१०।।

श्वभ्राम्बुसमीपगताः स्थिताश्च पौराः[2] प्रवासिनो ग्राम्याः ।
द्रेक्काणसदृशरूपाश्चोरा[3] वस्त्रादिभूषणैर्ज्ञेयाः ।।११।।

ह्रस्वं केन्द्रे द्रव्यं त्रिकोणचतुरश्रगा ग्रहा दीर्घम् ।
कुर्युर्विपुलं स्वांशालयेषु सच्छिद्रमन्येषु£ ।।१२।।

---

मनुजद्रेक्काणे लग्नगते उत्तमाश्चोराः । वानराद्यैरधमाः । द्रेक्काणवशाद्वदेत् ।१० ।।

एषां द्रेक्काणानां [योद ? य उद]यति तादृशश्चोरः । तद्वासीत्यर्थः । वस्त्रार्थभूषणैस्सह द्रेक्काणसदृशाश्चोराः ।।११।।

केन्द्रे बहुग्रहयुते ह्रस्वं द्रव्यं नष्टम् । त्रिकोणचतुरश्रगताश्चेद्दीर्घम् । स्वांशेषु स्वगृहगतेषु विपुलं वृत्ताकारं नष्टम् । अन्येषु परांशक्षेत्रगतेषु सच्छिद्रम् । भिन्नमित्यर्थः ।।१२।।

---

१ 'मानुषमूर्तिधरेषु द्रेक्काणेषूत्तमा नरा ज्ञेयाः ।
श्ववराहतुरगवानरसर्पाकृतिष्वधमाः' ।। घ, ठ, द, ध, प;
मानुषसमानमूर्तिद्रेक्काणेषूत्तमा ज्ञेयाः ।
श्ववराहतुरगवानरमुखेषु सर्पावृता अधमाः ।। ट.
२ 'चोराः' ख, ग, ट, ठ, द, ध, प. ३ 'पा ज्ञेया वस्त्रादिभूषणैर्युक्ताः' ख.

---

* बपाठे १०, ११. पद्ये न स्तः । £ एतदनन्तरं बपाठे 'अथवावे'ति (१९) पद्यमेवारभ्यते ।

आदौ चतुरश्रकरास्त्र्यश्रं मध्ये ग्रहाः प्रकुर्वन्ति ।
राश्यवसाने वृत्तं[१] स्वरूपतुल्यं हि वा कुर्युः ॥१३॥

*स्वांशक्षेत्रगतेषु[२] ग्रहेषु चात्मीयमादिशेद् द्रव्यम् ।
स्वांशेतर[३]राशिगते मित्रद्रव्यं समादेश्यम् ॥१४॥

£सम्बन्धिनां[४] स्वराशावन्यांशे द्रव्यमुच्यते सद्भिः ।
परराश्यंशकयुक्ते परभे परकीयमिति[५] वाच्यम् ॥१५॥

†चरभवनांशेषु शिरः स्थिरभवनांशेषु कायमध्यं स्यात् ।
उभयालयांशकेषु च जघन्यकायो विनिर्देश्यः ॥१६॥

---

सर्वे ग्रहाः सर्वराशिषु प्रथमद्रेक्काणे स्थिताः दर्शनेन नष्टद्रव्यं चतुरश्राकृतिं कुर्युः । मध्यद्रेक्काणगतास्त्र्यश्रं कुर्वन्ति । अन्त्यद्रेक्काणस्था वृत्तम् । द्रेक्काणे विबले ग्रहे बलवति ग्रहस्वरूपसदृशं नष्टद्रव्यं भवति ॥१३॥

$यो ग्रहो लग्नं वीक्षते स स्वांशक्षेत्रस्थश्चेत् तस्य कर्तृद्रव्यं भवति । परांशक्षेत्रगते ग्रहे मित्रद्रव्यं भवति । शत्रुक्षेत्रांशे वा शत्रोर्भवति ॥१४॥

स्वराशावेव ग्रहे अन्यांशकगते सम्बन्धिनां द्रव्यं भवति । परराशौ परांशकगते परस्य द्रव्यं भवति ॥१५॥

‡नष्टद्रव्ये भूषणे निश्चयिते कस्यावयवस्य भूषणम् । आह—चरराशौ वा

---

१ 'तुल्या हि वा कार्या' ख. २ 'षु वात्मीय' ख; 'षु भवति चात्मीयमादिशेद् द्रव्यम् । स्वांशे चरराशिगते यत्र द्रव्यं समादेश्यम् ।' झ. ३ 'वैश्रित्रं द्र' ख. ४ 'ना व' ख. ५ 'परकीयैर्द्रव्यमिति वा' ख.

---

* घ च न फ पाठेषु पद्यमिदं नास्ति । £ पद्यमिदं कखपाठयोर्नास्ति । † पद्यमिदं नफपाठयोर्नास्ति । $ स्वांक्षेत्रगतेषु ग्रहेषु भवति । परांशक्षेत्रगते ग्रहे मित्रद्रव्यं भवति शत्रुक्षेत्रांशे वा शत्रोर्भवति इत्येव कपाठे स्वांश इति पद्यस्य व्याख्या दृश्यते । ‡ इयमवतारिका झपाठे एव वर्तते ।

**सौम्यैर्महापथः स्यादशुभैर्दुर्मार्गमादिशेत् प्राज्ञः ।**
**हित्वा देशविभागं प्रष्टुर्ब्रूयाद् ग्रहोद्देशम् ॥१७॥**

**उडुतारा यावत्यस्तावद्द्रव्यप्रमाणमुदये स्यात् ।**
**यावन्तो वा चन्द्रस्थानं पश्यन्ति तावत् स्यात्*** **॥१८॥**

---

चरद्वादशांशे वा लग्नगते शिरसो भूषणम् । तथा स्थिरराश्यंशकेषु लग्नगतेषु ग्रीवाभरणम् । उभयराश्यंशकेषु पादाभरणम् । अथवा भिन्नं नष्टं चेत्तस्य द्रव्यस्यावयवमुक्तप्रकारेण द्रव्यं भवति ॥१६॥

सौम्यग्रहवीक्षिते लग्ने महापथेन गतश्चोरः । अशुभेन दुर्मार्गगतः । यानि योजनानि पूर्वोक्तानि तानि [भि ? हि]त्वातीत्य ग्रहस्य पूर्वोक्तभूमौ नष्टद्रव्यं वदेत् ॥१७॥

उदयगतस्य नक्षत्रस्य यावत्यस्तारकाः तत्प्रमाणमुदये बलवति । [1]अश्वयुजस्तिस्रः । भरणी तिस्रः । कृत्तिका षट् । रोहिण्यः पञ्च । मृगशीर्षास्तिस्रः । आर्द्रैका । पुनर्वसू द्वे । तिष्यस्तिस्रः । आश्लेषा षट् । मघाः पञ्च । पूर्वफल्गुनी द्वे । उत्तरफल्गुनी द्वे । हस्ताः पञ्च । चित्रैका । स्वात्येका । विशाखे द्वे । अनूराधास्तिस्रः । ज्येष्ठास्तिस्रः । मूलं नव । आषाढाद्वयं चतस्रः । श्रवणस्तिस्रः । श्रविष्ठा चतस्रः । शतभिषगृक्षशतम् । पूर्वप्रोष्ठपदा द्वे । उत्तरप्रोष्ठपदं द्वे । रेवती तिस्रः । इत्येतत्कृष्णाचार्यस्याभिप्रेतम् । आचार्यैर्बहुधा चोक्तम् । उदये दुर्बले चन्द्रं पश्यन्तो यावन्तो [2]ग्रहाः सा संख्या नष्टद्रव्यस्य । नक्षत्रतारासंख्यानं संहितासूक्तम्—

शिखिगुणरसेन्द्रियानलशशिविषयगुणर्तुपञ्चवसुपक्षाः ।
विषयैकचन्द्रभूतार्णवाग्निरुद्राश्विवसुदहनाः ॥
भूतशतपक्षवसवो द्वात्रिंशच्चेति तारकामानम् ।
क्रमशोऽश्विन्यादीनां कालस्ताराप्रमाणेन ॥

---

1 'युजि चतस्रः' ग, छ, झ. 2 'ग्रहाः तारासंख्या नष्टस्य उडुतारा यावत् तस्य तारा यावत्संख्या वर्तते तावदेव द्रव्यप्रमाणं भवति । अथवा चन्द्रं ग्रहाः पश्यन्ति तावद्द्रव्यसंख्यानं वदेत् । नक्षत्रतारासंख्यानं' ख, ज.

---

* एतदनन्तरम् 'अजवृष' (२८-२) इत्याद्येव बपाठे दृश्यते ।

अथवात्र[1] राशिभेदः कत्युडुभिः परिसमाप्यते लग्नम् ।
तावत्प्रमाणमथवा[2] राशिग्रहतारतो वाच्यम् ॥१९॥

[3] उदितनवांशकतुल्यं द्विगुणं द्विशरीरराशिहोरायाम् ।
द्वित्रिगुणैः स्थिरचरभेऽप्युदित[4]नवांशैर्वदेद् द्रव्यम्[5] ॥२०॥

इति कृष्णीयशास्त्रे सप्तविंशो[4]ऽध्यायः ।

---

नक्षत्रफलम्—उद्वाहे वर्षैस्तन्मितैः । तद्दिवसैर्ज्वरस्य नाशो व्याधेर [स्या ? न्यस्या-] थवा वाच्यः । ग्रहतुल्यतारमासैर्नष्टस्य लाभं वदेत् । अन्यदुक्तप्रकारेण । ग्रहकालमपि वक्ष्यति—पक्षाद्भानोः । सोमस्य मासिकः । अङ्गारकस्य वक्रप्रोक्तः । आदर्शनाच्च भावप्रोक्ता बुधस्य । जीवस्य वर्षेण । षड्भिः सितस्य मासैः । अब्देन शनैश्चरस्य । सुरद्विषोऽब्दार्धात् । एते कालविभागाः ग्रहावलोकेषु वक्तव्याः ।



लग्नराशि[यैं ? यभि]रुडुताराभिः परिसमाप्यते तावत्प्रमाणं वा वदेत् । द्रव्यसंख्यानं राश्यधिपतिना वा पश्यता ग्रहेण वा उक्तवद्वदेत् । उदये दुर्बले चन्द्रं ये ग्रहाः पश्यन्ति सा संख्या नष्टस्य । नीचारिगतैर्माषसंख्या । क्षेत्रगते निष्कसंख्या । उच्चगतैर्दश-गुणिता । बन्धुक्षेत्रगतैस्त्रिगुणितनिष्कम् । अथवा लग्नगतस्य राशेरभुक्तगतारासम्मितं नष्टद्रव्यम् । उदये दुर्बले चन्द्रावलोकनग्रहाणामुक्तं राशिप्रमाणम् ॥१९॥

लग्ने द्विशरीरे अनुभुक्तनवांशद्विगुणसंख्या । स्थिरेऽपि तथा । चरे त्रिगुणा । अयं क्रमो लग्ने दुर्बले वक्तव्यः ॥२०॥

[इति कृष्णीयव्याख्यायां चतुरसुन्दर्यां सप्तविंशोऽध्यायः ।]

---

१ 'वा त्रिरा' ख. २ 'णता वा रा' क, ख, घ, ङ, च, ठ, झ, ट, द, न, फ.
३ 'उदये न' ख, ग, घ, ङ, च, छ, ज, ठ, ध, न, फ. ४ 'भेऽभ्युदि' ख.
३ 'व्यम् ॥ नष्टप्रश्नं समाप्तम्' क, छ, ज. ४ 'ये विंशोऽध्यायः' झ.

## अथ अष्टाविंशोऽध्यायः

अजवृषधनुषां नवतिः शतानि झषमकरकुम्भानाम् ।
तौलेः सप्तदशाधिकमन्येषु शतं दशाभ्यधिकम् ॥१॥

चन्द्रस्यैका[१] नवतिः षष्टिर्जीवेऽशुभेषु पञ्चकृतिः ।
सप्ततिरधिका षड्भिः शुक्रे सौम्ये[२] चतुर्भिः स्यात् ॥२॥

द्विगुणं स्वगृहे कुरुते चतुर्गुणं स्वोच्चवक्रगो ज्ञेयः[३] ।
त्रिगुणं ग्रहस्त्रिकोणे जनयति शेषे[४] यथाप्राप्तम् ॥३॥



---

अजवृषधनुषां मयूखसंख्या नवतिः । मीनकुम्भमकराणां शतम् । तुलाधरस्य सप्तदशाधिकशतम् । अन्येषु मिथुनकर्कटकसिंहकन्यावृश्चिकेषु शतं दशाधिकं भवति ॥१॥

चन्द्रस्यै[को ? का][1] नवतिः । गुरोः षष्टिः । रविकुजशनैश्चराणां पञ्चविंशतिः । षट्सप्ततिः शुक्रस्य । चतुस्सप्ततिर्बुधस्य मयूखाः ॥२॥

सर्वग्रहाः स्वगृहे मयूखान् द्विगुणान् कुर्वन्ति । स्वोच्चे चतुर्गुणम् । वक्रगतश्चतुर्गुणम् । मूलत्रिकोणे त्रिगुणम् । अन्यत्र यथाप्राप्तम् ॥३॥

---

१ 'इन्द ः सेका नव' झ. २ 'म्येऽधिका चतु' ख, घ, फ. ३ 'यम्' ख, ग, ट, द, ध, प. ४ 'षंयंथासंख्यम्' क, ख, घ, ङ, च, ब.

---

1 'कोनन' क, झ.

हन्त्यस्तमये षष्ठं पञ्चममायुषि चतुर्थमथ नवमे ।

दशमे तृतीयमाये दायार्धं सर्वहानिरन्यत्र[१] ॥४॥

इति कृष्णीयशास्त्रेऽष्टाविंशोऽध्यायः ।

## एकोनत्रिंशोऽध्यायः

पुनरपि नष्टविशेषो योगविशेषेण कीर्त्यते[२] सम्यक् ।

मेषविलग्ने शशिना दारककटकं भवेन्नष्टम्* ॥१॥

---

सप्तमभवनादिगतो ग्रहः सौम्येतरो यथोक्त[1]प्रकारं हरति । तदर्धं शुभग्रहः । किन्तु अदृश्यार्धगता अपि हरन्ति । कथमिति चेत्—प्रश्नादिगानां शुभग्रहाणामायुषि द्वित्रिचतुष्पञ्चषड्भक्तानि गृह्णीयात् । तदर्धं क्रूरग्रहस्य गृह्णीयात् । यो यो ग्रहो लग्नगतः पृथक् पृथक् तस्य तस्यायुषा मयू[खाः ? खान्] संगुण्य लग्नायुः संयोज्य [2][द्वैगुण्या?] द्विगुणयेत् । ततो दृश्यार्धहरणमदृश्यार्धहरणं च कृत्वा सर्वेषां ग्रहाणामायूंषि लग्नायुषि संयोज्य पञ्चविंशाधिकशतेन हृत्वा शिष्टं प्रष्टुरायुर्वर्षाणि भवन्ति । दृश्यार्धहरणादन्यार्धहरणं न किञ्चित्कर्तव्यम् ॥४॥

[इति कृष्णीयव्याख्यायां चतुरसुन्दर्यां अष्टाविंशोऽध्यायः ।]

---

'पुनरपि नष्टविशेष' इत्यादि "शुक्रेक्षिते हिरण्यम्" (अ० ३० प० ४२) इत्यन्तेन मूलग्रन्थेनावगन्तव्यं[3] पूर्वोक्तलक्षणम् । योगफलयोर्विरोधे सति तयोर्बलाधिक्येन फलं ब्रूयात् सम्यगिति ॥

---

१ 'त्र ॥ मयूखविधिः' क; त्र॥ 'मयूखविधिः समाप्तः' ग, छ, ञ; 'त्र ॥ द्वाविंशोऽध्यायः' ट. २ 'कथ्यते' क.

---

1 'रे य' क. 2 'द्वे गुण्यादि गु' छ; 'द्विद्वैगुण्यादि गु' ञ. 3 'णयोग' ख, ग, छ, ज.

---

* एतदनन्तरं घचनफपाठेषु 'वर्गाः कचट' (३१/१) इत्यारभ्यैव वर्तते ।

उद्यानपुष्करिण्यां बुधयुक्ते [1]हेमजालमथ कटकम् ।
भृगुणा हिरण्यवस्त्रं स्वस्रा मात्राथवा नीतम् ॥२॥

कनकं गुरुणा युक्ते नष्टं मृतिसं[2]भ्रमेऽग्नियोगे वा ।
प्रतिवेशिना गृहीतं द्विजेन कनकोज्ज्वलाङ्गेन ॥३॥

सौरेण मेषलग्ने भूमौ कार्षापणानि निहितानि ।
दास्या प्रतिवेशिकया हृतानि तानीति वक्तव्यम् ॥४॥

जलमवतीर्णा शोणा द्वितीयदिवसे शशिप्रभा नष्टा ।
[3]द्रक्ष्यति चतुर्थदिवसे मध्याह्नार्केण संयुक्ते ॥५॥

[4]अजलग्ने बुधदृष्टे ह्यश्वतरीणामदर्शनं ब्रूयात् ।
[5]श्वःकाले रव्युदये लभ्यन्ते मृगयमाणेन ॥६॥

*शुक्रेक्षितेऽजलग्ने धेनुद्वयमत्र गर्भिणी चैका ।
तिसृणां गवामदर्शनमष्टमदिवसे भवेल्लाभः ॥७॥

---

१ 'हैम' क, ख. २ 'संभवे' ग, ठ, घ, प. ३ 'सि' क, ख, ग, ट, द. ४ 'बुधदृष्टे शशिलग्ने ह्यश्व' ख, ङ; 'बुधदृष्टे जललग्ने ह्यश्व' ट; 'बुधदृष्टे तल्लग्ने' द. ५ 'शुष्कनदीकूलगता लभ्यन्ते मृगयमाणैस्ताः' ख, घ; 'शुष्कनदीकूलगता लभ्यन्ते मृगयमाणेऽर्थाः' ङ; 'शुष्कनदीकूलगता लभ्य' ट; 'शुष्कनदीकूलगता लभ्यन्ते मृगयमाणैस्तैः' ठ, प.

---

* पद्यमिदं गपाठे नास्ति । एतत्पद्यानन्तरं 'बुधदृष्टे तल्लग्ने ह्यश्वतरीणामदर्शनं ब्रूयात् । श्वःकाले रव्युदये लभ्यन्ते मृगयमाणेन' ॥ इति झ, ठ, घ, प पाठेष्वधिकं दृश्यते ।

अद्य चतुर्थे दिवसे [1]छागा नष्टास्तथार्किणा दृष्टे ।

[2]प्रतिवेशिको वयस्यो नवमे [3]दिवसे स्वयं नेता ॥८॥

£शशिशुक्राभ्यां दृष्टेऽशीतिर्गावो हृताः सगोपालाः ।

निशि [4]सूचकोऽद्य वक्ष्यति वार्तामिति पृच्छते ब्रूयात् ॥९॥

*चन्द्राङ्गारकदृष्टे द्वादश नष्टा दिवा महिष्यस्ताः ।

[5]आनेष्यन्ते सुहृदा [6]द्वितीयदिवसेऽपि नष्टैका ॥१०॥

†नाशयतो गां बलिनौ चतुरश्रगतौ शशाङ्कदेवगुरू ।

एका [7]निवर्तते सा कपिला वर्णेन निर्देश्या ॥११॥

अन्यच्चाभिज्ञानं [8]त्रीणि च कार्षापणानि चोत्सङ्गे ।

द्वे कूटके [9]भवेतामेकं नष्टं विनिर्देश्यम् ॥१२॥

$बुधगुरुशशिभिर्दृष्टे [10]सुवर्णकृतपरशुलो[11]हरूपाश्च ।

प्रतिवेशिन्या नीता ब्राह्मण्या क्रूरकर्मिकया ॥१३॥

---

१ 'छागो नष्टश्शनैश्चरे दृष्टे' ग, झ, ठ, द, ध, प. २ 'शिमको' ङ, ट. ३ 'सेऽथवा ने' ख, ङ; 'से तथा नेता' ट ४ 'चकोऽत्र' ठ. ५ 'अन्वेष्य' क, ख. ६ 'से विनष्टै' झ, द. ७ 'तेऽसौ क' ङ. ८ तृणानि का' ख; 'त्रीणि तु का' ग, झ, ट, ठ, द, ध, प. ९ 'मेकं शुद्धं वि' ख, ग, ठ, द, ध, प. १० स्वर्णाकृतिपरशुलोहकर्णा च' ख. ११ 'हकर्णश्च' ट.

---

£ पद्यमिदं झपाठे नास्ति । * दपपाठयोः दशमैकादशपद्ययोः पौर्वापर्यव्यत्यासो दृश्यते । † ख, ग, झ, ट, ठ, ध पाठेष्विदं पद्यं नास्ति । $ खपाठे गेहान्तरे चतुर्थे (श्लो १६) इति पद्यानन्तरमिदं पद्यं वर्तते ।

सौराराभ्यां दृष्टे पात्रविशेषा हिरण्यकांस्यमयाः ।
लभ्यन्ते च [1]विनष्टा गोपालैः सप्तमे दिवसे ॥१४॥

गुरुशुक्रचन्द्रदृष्टे [2]कटकं प्रावारकं च यन्नष्टम् ।
पर्यङ्कगतं दास्या [3]तुरङ्गनाम्न्या च तन्नीतम् ॥१५॥

[4]गेहान्तरे चतुर्थेऽप्युदकसमीपे करण्डके [5]निहितम् ।
[6]प्रावारकमुपरि [7]जलाल्लम्बितमिति पृच्छते ब्रूयात् ॥१६॥

गुरुकुजदृष्टे मेषे [8]स्वर्णाकृति[9]गोळिकां च मञ्जूषाम् ।
[10]हृत्वा कुब्जा दासी [11]दत्तवती मित्रजनहस्ते ॥१७॥

बुधसौराभ्यां दृष्टे [12]जानीयाज्जीर्णकम्बलं नष्टम् ।
द्रामिळभूमिकसंज्ञौ वैश्यौ प्रतिवेशिनौ चोरौ ॥१८॥

कांसीयभाजनानि च हिरण्यवस्त्राणि भौमबुधदृष्टे ।
लेखकहृतानि भाजनमेकं भिन्नं विजानीयात् ॥१९॥

---

१ 'सुविनष्टा' ख. २ 'कनकं प्रावरकं च यन्न' ख, ङ. ३ 'कुरङ्गनाम्ना' क, ख, ग, ट, ठ, द, ध, प. ४ 'देशान्तरे च' ट. ५ 'नीतम्' ट. ६ 'प्रावरणमु' क, ग, झ, ठ, ध, प; 'प्रावरकमु' ट. ७ 'लालम्बि' ख, ङ. ८ 'सुवर्णकृत' क, ख, झ, ठ, द, ध, प. ९ 'गोलकाञ्च' ख, ट, द. १० 'त्वा च कुब्जनारी' ख, ङ. ११ 'त्तं चामित्रजनहस्ते' ख. १२ 'चान्मित्रक' ख, ङ.

श्रवणं तव[1] नक्षत्रं हस्तः[2] पुत्रस्य रोहिणी[3] च पितुः ।
अतिबाध्यते शिरोऽस्य त्रस्यति कालेन चेति वदेत् ॥२०॥

गुरुकुजयो[4]रुच्चगयोर्मेषे च विलग्नमुपयाते ।
राजाभिषेकभाण्डं नष्टं दुःखेन तल्लभ्यम् ॥२१॥

सौम्यग्रहसंयुक्ते शशिजे लभ्येत नष्टमिति वाच्यम् ।
*आग्नेययुते सौम्ये न चास्ति लाभो विनष्टस्य ॥२२॥

£उच्चाश्रितयो[5]र्गुर्वर्कजयोरम्बरसुवर्णरत्नानि ।
लोहं च हृतं दास्या गर्भिण्या विस्मृतं गेहे ॥२३॥



गुरुसौम्यावुच्चगतौ मेषविलग्ने[6]ऽश्वनाशमथ कुरुतः ।
लभसे विदिशं गत्वा त्वमिति ब्रूयात्तु पृच्छन्तम् ॥२४॥

‡शुक्रार्काभ्यां दृष्टे कनकप्रावारकम्बळादर्शान् ।
दिवसत्रयेण नष्टांश्चोरोऽर्पयतीति वक्तव्यम् ॥२५॥

---

१ 'तन्नक्ष' ख. २ 'स्तं' ग, घ, ङ, छ, प. ३ 'णो वातः' ख. ४ 'योरप्युच्च गतयोर्मेषे च लग्नमु' ख, ङ. ५ 'र्गुरुरविसुतयोरम्ब' ख, ङ. ६ 'ग्ने विनाशम' ख.

---

* टपाठे 'आग्नेये'त्यनन्तरं 'सिंहगतै'रिति पद्यस्य (३८ श्लो०) 'गतै'रिति भागादारभ्यैव वर्तते । £ पद्यमिदं दपाठे नास्ति । ‡ झपाठे पद्यमिदं नास्ति ।

इन्दुगुरुभ्यां दृष्टे भार्याभरणं [१]विनष्टमजलग्ने ।
विप्रप्रतिवेशिकया दास्या मुषितं विजानीयात् ॥२६॥

£लग्नस्य पूर्वभागे विप्रेणोद्योगकारिणा व्याळे ।
स्यात् क्षत्रियेण मध्ये [२]सरीसृपेणान्त्यगे नीतम् ॥२७॥

शुक्रे पूर्वविभागे रजको मध्याश्रिते तु वाणिजकः ।
[३]लग्नान्तगते शुक्रे प्रमदा चोरीति [४]वक्तव्यम् ॥२८॥

राशिप्रमुखे शशिजे शबरो मध्याश्रिते शिरोरक्षः ।
प्रेषणकृत्तु बुधेऽन्त्ये स्तेनो निर्दिश्यतां सततम्* ॥२९॥

लग्नाद्ये चन्द्रयुते चोरं राजाश्रितं विजानीयात् ।
मध्येऽङ्गनावसाने [५]हर्तास्य तु कारुको भवति ॥३०॥

[६]उदयाद्ये भौमयुते बालो मध्ये कविः [७]समाहर्ता ।
[८]दासोऽन्त्यगते वाच्यो भवनैः सर्वैः क्रमश्चायम् ॥३१॥

---

१ 'मध ल' ग, ठ, द, ध, प. २ 'णान्ततो नो' ख, ङ. ३ 'ग्नास्व' ख.
४ 'व्या' ख. ५ 'स्यात्कारको भ' ख. ६ 'लग्नाद्ये' ख. ७ 'मो ह' ख, ङ.
८ 'भान्तगतेऽपि च वा' ख, ङ.

---

£ ग ठ द ध प पाठेष्विदं पद्यं 'राशिप्रमुखे' (२९) इति पद्यादनन्तरं विद्यते।
* इतोऽनन्तरं झपाठे 'राहौ लग्नप्रथमे द्रेक्काणगते द्विजेन हृतम् । मध्ये क्षत्रियेणान्त्ये सरीसृपेण लग्नाद्ये' इत्यधिकं दृश्यते ।

यज्जातयो ग्रहा ये ते चोच्चगता वदन्ति तज्जातिम् ।
तद्वत्स्वराशिनीचाश्रिता[१]स्ततोऽन्यत्र तद्धीना[२]म् ॥३२॥

चतुरश्रचतुष्टयगैस्त्रिकोणनिलयै[३]र्ग्रहैरथ क्रूरैः ।
*दृष्टे ब्रूयान्नष्टं विनष्टमित्यन्यथा सौम्यैः ॥३३॥

£सौम्यैरुच्चालयगैर्नो नश्यति मित्रदृष्टे च ।
सौम्यैरपि नीचस्थैर्विनष्टमुच्चाश्रितैररिभिः ॥३४॥

लग्नं मेषसमानं चतुष्पदस्था[४] ग्रहा निरीक्षन्ते ।
जनयन्ति चतुष्पादं द्विपदे चायं क्रमो ज्ञेयः ॥३५॥

शुक्रश्चतुष्पदस्थः कुरुते गामर्कजो बलीवर्दान् ।
सुरगुरुरस्तोपगतः कुरुते तुरगाश्र[५]यां चिन्ताम् ॥३६॥

गौरिति जाङ्गलराशौ जलचरभवने विनिर्दिशेन्महिषीम् ।
द्विशरीरेऽश्वं ब्रूयात्सरीसृपर्क्षे चतुष्पदिनः ॥३७॥

दृष्टे सरीसृपस्थैः सरीसृपाख्यैर्ग्रहैरल[६]ङ्कारः ।
सिंहगतै[७]रप्येतैर्दृष्टे कांस्यं हिरण्यञ्च ॥३८॥

इति कृष्णीयशास्त्रे एकोनत्रिंशोऽध्यायः ।

१ 'तास्तयान्य' ख. २ 'नाः' क, ख, ग, ङ, ठ, ध, प. ३ 'यैरथ ग्रहैः क्रूरैः' ख, ग, प. ४ 'स्था ग्रहाश्चतुष्पदिनः' क, ख, ग, ङ, ठ, द, ध; 'स्थं ग्रहाश्चतुष्पदिनः' प. ५ 'श्रितां चि' क, ख, ग, झ, ध, प. ६ 'ङ्काराः' ख. ७ 'रप्यथवा दृ' ख.

* पद्यार्धमिदं गदपाठयोर्नास्ति । £ झपाठे पद्यमिदं नास्ति ।

## त्रिंशोऽध्यायः

नष्टं चतुष्पदं स्याद् वृषलग्ने शुक्रदर्शने वस्त्रम्[१] ।
ताम्रं सुरगुरुदृष्टे बुधेन मणिभाजनं ज्ञेयम् ॥१॥

सौरेण काललोहं शशिना स्त्री दिनकृता हिरण्याख्यम् ।
मूर्धाभरणं पृथिवीसुतेन कटिभूषणञ्चैव[२] ॥२॥

सौरगुरुभ्यां[३] दृष्टे हिरण्यमपि काचकं ततो विद्यात् ।
गुरुशुक्राभ्यां दृष्टे सधातु[४] ताम्रेण तद्वाच्यम् ॥३॥

भौमशनैश्चरदृष्टे नारीमुखभूषणानि[५] तानि स्युः ।
शशिशुक्राभ्यां दृष्टे चामीकरयुक्तवस्त्राणि ॥४॥

शुक्रदिवाकरदृष्टे काञ्चनकृतभाजनं हिरण्यं च ।
शेषेणोच्चादिविधिर्व्याख्यातः[६] सर्वभवनेषु ॥५॥

पुरुषौ नरराशिगतौ रविशशिपुत्रौ नपुंसकौ स्त्र्यर्क्षे ।
गुरुरविभौमाः पुरुषाः पुरुषालयगा न सन्दिग्धाः ॥६॥

सर्वत्र शुक्रचन्द्रौ स्त्रीभावौ सर्वभावचिन्तायाम् ।
पल्वलकूपनदीनां[७] चरभवनादौ प्रभू ज्ञेयौ ॥७॥

---

१ 'नाद्वस्त्रम्' ख. २ 'टिसूत्रकञ्चैव' ख, ङ. ३ 'रभृगुभ्यां' ग, छ, ठ, द, ध, प. ४ 'सदा तु' क, ग, ङ, झ, ठ, द, ध, प. ५ 'रोजनभू' ख. ६ 'शेषेणोच्चादिभिरपि वाच्यं स्यात्सर्वं' ख. ७ 'नादीनि कर्तृणि' ख, ङ, ट.

गान्धर्वदूतलेखकनारीप्रतिहारिशिल्पिमिथुनानाम् ।
आभरणानि विलग्ने मिथुनस्यैतानि बुधदृष्टे ॥८॥

भृगुणा वस्त्रं भूमेः सुतेन कनकं यमेन लोहं स्यात् ।
कनकं गुरुणा रविणा चतुष्पदं वस्त्रमुडुपतिना ॥९॥

यमबुधदृष्टे ज्ञातं सुवर्णमितरैर्बुधेन मिथुनगतैः ।
वाच्यं ग्रहैः प्रमाणं प्रवेशरूपालयाकारैः ॥१०॥

कर्किण्युदयं प्राप्ते ह्यारामोद्यानभूमियातस्य* ।
नष्टं कनकाभरणं दास्या मुषितं जलाभ्याशे ॥११॥

शशिनेक्षिते कुळीरे जलगतमथ तत्र संस्थितेऽभ्युदयात्[1] ।
पुष्पसमीपे भोज्ये[2] सुहृदां तु समागमे[3] पतितम् ॥१२॥

शुक्रेण युते नार्या यमेन दास्या द्विजेन रवियोगे ।
गुरुणा सुहृदा मुषितं शशिजेन तु सूपकारेण ॥१३॥

उदये[4] भृगुणा युक्ते शुष्कतटाकेऽर्कभौमसंयुक्ते ।
उद्याने बुधयुक्ते स्नानगृहे चन्द्रसंयुक्ते ॥१४॥

शशिवीक्षणे[5] हिरण्यं बुधेन सह वीक्षणेन मणिमुक्ते[6] ।
लोहोपस्करमक्षितेनाच्छादनमाह शुक्रेण[7] ॥१५॥

१ 'तोऽभ्यु' ख, ट. २ 'ज्यैः' ख. ३ 'मो भवति' ख, ङ. ४ 'के' ख, ङ, ध. ५ 'क्षिते हि' ख. ६ 'वीक्षणे मणिर्मुक्ता ।' ख. ७ 'माशु शु' ख, ङ.

* इतः परं ङपाठो नास्ति ।

हिबुके निधानमुदये कनकं मेषूरणे हिरण्यं स्यात् ।
जामित्रे चोपस्करमाहुर्ग्रहवर्जिते मुनयः ॥१६॥

सिंहस्याद्ये[1] लग्ने कनकं मध्ये हिरण्यमिति विद्यात्[2] ।
आच्छादनं तृतीये ग्रहरहिते सर्वदा वाच्यम्[3] ॥१७॥

कनकं ताम्रं रजतं मणिरायसकांस्यपात्रसंसानि ।
आदित्यभौमसुरगुरुबुधयमशशिशुक्रसंयुक्ते[4] ॥१८॥

सूर्यः[5] पश्यति यदि वा कनकं सौरस्तु हारकं[6] हरितम् ।
सौम्येन महारजतं शुक्रेणाच्छादनं चैव ॥१९॥

भवति हिरण्यं शशिना भौमेन तु काञ्चनं प्रभूतं स्यात् ।
दृष्टे[7] चार्केण युते कनकं सिंहे विजानीयात्* ॥२०॥

आदित्यशुक्रदृष्टे चामीकरमम्बरं च निर्देश्यम् ।
बुधदृष्टे तु सुवर्णं मुक्तामणयस्तथा ज्ञेयाः ।२१॥

चन्द्रेक्षिते हिरण्यं वस्त्रं यमवीक्षिते त्वयोभाण्डम् ।
सोपस्करमथ गुरुणा कुजेन कनकायुधं वाच्यम् ॥२२॥



---

१ 'स्याद्यविल' ख. २ 'ति वाच्यम्' ख, ङ. ३ ज्ञेयम्' ख. ४ 'मशशि-भार्गवैर्युक्तैः' ग, ट, ठ, द, ध. ५ 'शुक्रः सूर्यं पश्येत्कन' क, ग, ठ, द, ध, प. ६ 'हाटकं विद्यात्' क, ख, ङ, ट. ७ 'ष्टे वार्के' ख, ङ, द, ध, प.

---

* टपाठे एतदनन्तरम् 'इति कृष्णीयं समाप्तम्' इति वर्तते । ततश्च 'आदित्ये'त्यादि-पद्यानि च विद्यन्ते ।

शिल्पचतुष्पद[1]मुक्ताकाञ्चनमणिवज्रहाटका धनुषि ।
[2]गुरुणा कनकं शिल्पं हिरण्यमप्युशनसा युक्ते ॥२३॥

हैरण्यायुधकनकं रविणा सौरेण [3]चापि भाण्डमिति ।
[4]जीर्णा स्त्री दासी वा चापविलग्ने गते राहौ ॥२४॥

सौम्येन सर्व[5]शिल्पं मौक्तिकमणयश्च सूरिभिः कथिताः ।
कवचं धनुश्च दन्तं चर्म च भौमेन कनकं च ॥२५॥

मकरोदये सुवर्णं भूषणशयनीयसासवस्त्राणि ।
स्थानारकूटलोहककांस्यत्रपुकाणि जानीयात् ॥२६॥

सौरेण [6]युते क्षेत्रे बुधसौराभ्यां च [7]पानकद्रव्यम् ।
भोजनभाण्डं विद्याच्छुक्रार्किभ्यां समायुक्ते ॥२७॥

रविरविजाभ्यां [8]युक्ते सुवर्णमथवा चतुष्पदं चैव* ।
चन्द्रशनैश्चरयुक्ते काञ्चनवस्त्रे समादेश्ये£ ॥२८॥

---

१ 'णिवज्रभाण्डकं ध' ख. २ 'णा युक्ते लग्ने हिरण्यमप्युशनसा समायुक्ते' ख. ३ 'ण भाण्डमिति वाच्यम्' ख, ग. ४ 'जीर्णस्त्री' ख. ५ 'ल्पा' ख. ६ 'ते तस्मिन् बु' ख. ७ 'हाटकद्र' ख; 'पानकं द्र' ग, ङ, ठ, ध, प; 'कानकं द्र' ट. ८ 'दृष्टे' क

---

* खपाठे इतोऽनन्तरं त्रिंशत्तमपद्यमारभ्यैवास्ति । £ ङपाठे एतदनन्तरं त्रिंशत्तमपद्यमारभ्यैवास्ति ।

देवाकरिभौमाभ्यां युक्ते तपनीयमाह ताम्रं च ।
गुरुरविजैः संयुक्ते वस्त्रं चामीकरं चैव ॥२९॥

भृगुदिनकरपुत्राभ्यां[1] नष्टं वस्त्रं वदन्ति कनकं च ।
काचकृताभरणानां विनाशमाचक्षते मुनयः ॥३०॥

कालायसमर्कसुते चन्द्रे वज्रं[2] बुधे तु मणिभाण्डम ।
शुक्रे गन्धद्रव्यं भौमे लाक्षा रवौ तु कनकं च ॥३१॥

उच्चे स्थित्वा पश्येद्[3] गुरुश्वो नीचमाश्रितो महिषी ।
नीचोच्चगतेनापि च यमेन दृष्टे भवेन्महिषी ॥३२॥

अत्युच्चस्थानगते[4] चन्द्रे नीचेऽङ्गना विनिर्दिष्टा ।
उच्चे नीचे वापि च शुक्रे योषित्[5] सदा वाच्या ॥३३॥

अश्वतरी स्यात्सौम्ये[6] नीचे वोच्चेऽथवाश्रिते नियतम् ।
संयोगे[7] द्विशरीरे चरे तु बाह्यः स्थिरे चान्तः ॥३४॥

मेषवदष्टमराशिर्वृषेण तुल्यस्तुलाधरः[8] फलतः ।
कन्या मिथुनेन समा धनुषा मीनो मृगेण घटः ॥३५॥

---

१ 'भुमास्करतनयाभ्यां युक्ते वस्त्रं वदन्ति कनकेन' ख. २ 'वस्त्रं' ख. ३ 'श्येज्जीवो नीचाश्रितो महिषी' ख. ४ 'ते वा च' ख, ङ. ५ 'दा समादेश्या' ख. ६ 'म्ये स्वोच्चे न चेऽथवा सततम् ।' ख; 'म्ये नीचे वोच्चाश्रिते नियतम्' ठ, प. ७ 'गो' ख, ङ. ८ 'ला फल' ख.

स्वांशं चन्द्रः [1]पश्येद्धिरण्यमादित्यदर्शने ताम्रम् ।
गुरुवीक्षणे सुवर्णं भृगुणा नार्यार्किणा कांस्यम् ॥३६॥

शुक्रांशे [2]गुरुदृष्टे नारीपुरुषौ तु ताम्रमर्केण ।
चन्द्रात्मजेन वाहनमुडुपतिदृष्टे भवेद्वस्त्रम् ॥३७॥

गुरुभौमाभ्यां दृष्टे सुवर्णमुशनोंऽशके विनिर्दिष्टम् ।
आत्मांशके सुवर्णं गुरुणा रविवीक्षिते कनकम् ॥३८॥

शशिना दुकूलवस्त्रं [3]भृगुभौमाभ्यां च काञ्चनं दृष्टे ।
भास्करसुतेन दृष्टे विरागभाण्डं च काष्ठकृतम् ॥३९॥

भौमः स्वांशं पश्येत् कनकं सूर्यो गुरुश्च तत् कुरुते ।
इन्दुर्वस्त्र कुरुते [4]सौरस्ताम्रं भृगुर्नारीम् ॥४०॥

स्वांशं [5]वीक्षेतार्किर्लोहं [6]सूर्येक्षणेन करवाळम् ।
चन्द्रेण [7]मण्डलानि च गुरुणा दृष्टे [8]बलीवर्दः ॥४१॥

---

१ 'श्येत्सुवर्णमा' ख. २ भृगुदृ' ख, ट. ३ 'गुरुभौ' क, ङ ४ 'ते भौ स्ता' ख. ५ 'क्षेदार्किर्लो' ख, ट. ६ 'णे तरुजम्' ख. ७ 'लं स्याद् गु' ख, ङ. ८ ष्टे प्रवाळमिति वाच्यम् । प्रवद' ख.

शुक्रेक्षिते हिरण्यं बुधेन दृष्टे प्रवालमिति वाच्यम् ।
प्रवदन्त्याभरणानि[1] च धरणीपुत्रेण सन्दृष्टे ॥४२॥*

इति कृष्णीयशास्त्रे[2] त्रिंशोऽध्यायः ।

---

## एकत्रिंशोऽध्यायः

वर्गाः कचटतपाद्या लोहितभृगुसौम्यजीवसौराणाम् ।
सूर्यस्याकाराद्याः शशिनो वर्णा यकाराद्याः ॥१॥

नष्टद्रव्येषु चोरेषु विज्ञातेषु चोराणां नामविज्ञापनार्थमक्षराणां ग्रहराशिषु सम्बन्ध उच्यते वर्गा इति । अवर्गः सूर्यस्य । अ, आ, इ, ई, उ, ऊ, ऋ, ॠ, ए, ऐ, ओ, औ, अं एते द्वादशाक्षराः (?) सूर्यस्य भवन्ति । ऌ, ॡ, अः एते वर्णाः नामादौ न भवन्ति । तस्मादिदानीं न गृह्यन्ते । क, ख, ग, घ, ङ, कुजस्य । च, छ, ज, झ, ञ, शुक्रस्य । ट, ठ, ड, ढ, ण बुधस्य । त, थ द, ध, न जीवस्य । प, फ, ब, भ, म शनेः । य, र, ल, व चन्द्रस्य । श, ष, स, ह, ळ, क्ष राहोः£ इति ॥१॥

---

१ 'नि क्षोणीपु' ख, ङ, ट. २ 'स्त्रे विंश ऽध्यायः' ढ; 'स्त्रे एकोनविंश ऽध्यायः' प.

---

* ङपाठे एतत्पद्यानन्तरं 'देवाकारि' (अ० ३०—श्लो० २९) इति पद्यं विद्यते । व्याख्यायाः कगछझपाठेषु च एवं दृश्यते—'कनकमित्यादि (अ० २९ श्लो० ३) । अत्र भविष्यत्केषाञ्चिच्छ्लोकानां व्याख्या न कृता एवं बलयुक्तयोः नष्टप्रश्ने चिन्तायां वा प्रष्टुः[1] सवादं यत्तदेव वदेत् । नन्वस्मिन् शास्त्रे एकस्य द्रव्यस्याभिज्ञानं[2] बहुधा उक्तम्[3] । तस्मात् कथं निश्चयेन व्यवस्यते । मूढोऽसि । अस्मिन् शास्त्रे यानि लक्षणानि[4] एकलग्ने सन्ति तेषां बलाधिकं[5] ग्राह्यम् । एकेन लक्षणेनापि सर्वं ज्ञातुं न शक्यते तस्माद् बहुधा लक्षणमुक्तम्' इति । £ इतोऽनन्तरं खजपाठयोः 'मेषादिष्विति' (३१/३) पद्यव्याख्या, ततश्च 'वर्गाः स्वस्वामीति' (३१/४) पद्यस्य कश्चिद्भागः' 'ततश्च दत्वयमपापेभ्य' इति (३२/३) पद्यस्य व्याख्यानमारब्धं दृश्यते ।

---

1 'वाच्यं प्र' ग, छ, झ. 2 'स्यापि विज्ञा' ग, छ, झ. 3 'म् । कथं' क. 4 'लक्षणे' ग; छ. 5 'कमिति' क.

मेषादौ द्वादशके चाकारादीन् नियोजयेद्वर्णान्[1] ।
इत्येवं ब्रुवतेऽन्ये परे तु लग्नादिमिच्छन्ति ॥२॥

मेषादिषु नवभागाः स्वेश्वरवर्णाः क्रमेण समभिहिताः ।
वर्गे च परिसमाप्ते पूर्ववदारभ्यते भूयः ॥३॥

वर्गाः[2] स्वस्वामिपरास्त्रिशद्भागेष्वनुक्रमात् काद्याः ।
राशेर्द्वादशभागे[3] दिनकरभागः स्वरा भाव्याः[4] ॥४॥

अकारादीन् वर्णान् मेषादिषु राशिषु संयोजयेत् । कथमिति चेत् अ, आ, इ, ई मेषस्य । उ, ऊ, ऋ वृषभस्य । ॠ, ऌ, ॡ मिथुनस्य । ए, ऐ कर्कटकस्य । ओ, औ सिंहस्य । अं, अः कन्यायाम् । कवर्गास्तुलायाम् । चवर्गा वृश्चिकस्य । टवर्गा धनुषः । तवर्गा मृगस्य । पवर्गाः कुम्भस्य । यरलवा मीनस्य । श, ष, स, ह, ळ, क्ष इति कन्यायाः । प्राहुराचार्याः । केचिल्लग्नादिषु द्वादशराशिषु अकारादीन् वदन्ति । न तत् कृष्णाचार्यमतम् । पूर्वोक्तग्रहवर्णविधौ ओजराशिषु स्थितस्य कुजस्य प्रथमतृतीयपञ्चमा वर्णा अक्षरा इत्यर्थः । शेषाणां द्विभवनानामेवं योजयेत् । युग्मे स्थितस्य कुजस्य द्वितीयचतुर्थौ । सूर्यस्य चन्द्रम[सोरे? सश्चै]तन्नास्ति एकभवना[धिक? धिप]त्वात् । उदितभागक्रमादक्षरो ग्राह्यः ॥२॥

मेषादिषु राशिषु नवांशकाः स्वेश्वरवर्णा उक्ताः । मेषांशे मेषवदित्यर्थः । वर्गे परिसमाप्ते पूर्ववदकारादिः प्रारभ्यते मुनिभिः ॥३॥

राशेर्द्वादशभागा दिनभागाः स्वरा भाव्याः । त्रिशद्भागेषु स्वस्वामिवर्णाः काद्याः ग्राह्याः[1] । राशिं विभज्य षट्सु षट्सु भागेषु ककाराद्या वर्गा ज्ञेयाः इति केचिद्वदन्ति । ओजयुग्मविधिना अक्षरव्यक्तिरिष्यते । सूर्याक्षरद्वादशभागात् क्रमादकाराद्या ज्ञेयाः ।

१ 'के कादीन् विनि' ख. २ 'वर्णाः' ख, ङ. ३ '॰ाशो द्वा' ख. ३ '॰ा स्थाप्याः' क, ख.

1 'वर्णा योज्याः' ग, छ.

स्वांशे [1]ग्रहे स्ववर्गं तद्वर्णयुतं परांशके कुरुते ।

पुरुषेषु महाप्राणाः ह्रस्वा नारीषु मृदुदीर्घाः [2] ।।५।।

*होरामारूढं वा यावन्तोऽत्र ग्रहा निरीक्षन्ते ।

यावन्तो वा केन्द्रान्तरेषु वर्णास्तु तावन्तः ।।६।।

---

चन्द्रस्थितराशिं चतुर्धा विभज्य यस्मिन् चन्द्रः स्थितः तत्क्रमाद् यादीन् वदेत् । तथा षड्धा विभज्य राहोरिति ।।४।।

स्वांशके ग्रहे स्थिते स्ववर्णमेव कुरुते । परांशके तद्वर्णयुतम् । संयुक्तमित्यर्थः । पुरुषेषु महाप्राणाः घोषाक्षराः प्लुता भवन्ति । त एव नारीषु अघोषा मृदुदीर्घ भवन्ति । द्रव्यमित्यर्थः । कथं घोषाक्षरेषु अघोषाः । स्त्रीवाचित्वात् । कथम् । असंस्कृतत्वात् । प्रायेण जना मूढा असंस्कृतभाषिणः । तेषां वक्ष्ये प्राकृतलिपीन्— അ, ആ, ഇ, ഈ, ഉ, ഊ, എ, ഏ, ഐ, ഒ, ഓ, ഔ सूर्यस्य । क, ങ कुजस्य । ച, ഞ भृगोः । ട, ണ बुधस्य । ത, ന गुरोः । പ, മ मन्दस्य । ര, യ, ല, വ चन्द्रस्य । ഴ, ള, റ ന£ इति राहोरिति । कुजादीनां पूर्वार्धभागे पूर्वाक्षरम् । अपरभागे पवर्गपञ्चमम् । अन्ये पूर्ववत् ग्रहराशीनां बलाधिकेन नामप्रथमाक्षरं रचयेत् । अंशकाधिपतौ बलयुते संयोगाक्षरं [1] भवतीति ।।५।।

प्रश्नलग्नं प्रष्टा आरूढराशिं वा बलयुतं यावन्तो ग्रहाः पश्यन्ति, यावन्तो वा केन्द्रान्तरेषु वर्णास्तु तावन्तः । यावसंख्या ग्रहास्तिष्ठन्ति तावत्संख्या वर्णा ग्राह्याः । बहुषु चोरेषु उक्तः प्रश्नकारैर्नामानि वदेत् ।।६।।

---

१ 'ग्रहस्व' ख. २ 'दुर्दीर्घा' ब, च.

---

1 'क्ते स' ग, छ.

---

* घचतफपाठेष्विदं पद्यं नास्ति । £ एतान्यक्षराणि ग छपाठयोरेव सन्ति । तानि तु कोलेषुत्तुनामकलिप्यां लिखितानि ।

अथवा शङ्कुच्छायानिहतं केन्द्रं भवेद् ग्रहैः क्रमशः ।
गणयेच्छेषं[1] रविकुजभृगुबुधगुरुसौरशशिन इति ॥७॥

विषमे चैवं युग्मे रविकुजयमजीवसौम्यभृगुचन्द्राः ।
एवं वर्गानयनं वर्गच्छिन्नो[2] भवेद्वर्णः ॥८॥

केन्द्रेषु[3] चतुर्ष्वेवं कृत्वा बलपूर्वक्रेण[4] नामाद्यम् ।
रचयेदक्षरपङ्क्तिं ग्रहगृहयोगं समालोक्य ॥९॥

इति कृष्णीयशास्त्रे एकत्रिंशोऽध्यायः ।

---

अथवा प्रश्नकाले उदयगतराशिं तात्कालीकृत्य तत्कालां शङ्कुच्छायां गुणित्वा ग्रहैः सप्तभिर्विभजेत् । तच्छे[ष ? षं] क्रमेण गणयेद्रविकुजभृगुबुधगुरुसौरशशिनः । ततस्तस्य वर्गो ग्राह्यः ॥७॥

विषमराशावुक्तम् । युग्मराशौ रविकुजशनिजीवसौम्यभृगुचन्द्राः क्रमाद् ग्राह्याः । यद्वशेषितस्तदन्त्यवर्णश्चोरनामाद्यक्षरः ॥८॥

चतुर्षु केन्द्रेष्वेवं गुणहारौ । शेषं गृह्णीयात् । पूर्ववदोजयुग्मे ज्ञात्वा गणयेदित्यर्थः । अयं तु विशेषः—चतुर्णां केन्द्राणां पूर्वं बलाधिको ग्राह्यः । ततस्त्रयाणां बलाधिकः । ततो द्वयोरपि । केन्द्रेषु ग्रहयुक्तेषु तद्ग्रहाक्षरमपि गृह्णीयात् । ततो राशिवर्णमपि । आद्याक्षरं पूर्वं कृत्वा पश्चाद् ग्रहराशिभिर्बलाधिकैश्चोरनामाक्षराणि गृह्णीयात् । एवं चोराणां नामानि तत्तल्लक्षणैरन्यान् चिह्नान् ज्ञात्वा वदेत् । येन राशिना यत्र स्थितेन ग्रहेण वा चोरनामाद्यक्षरं परिगृह्यते तस्य राशेर्नवमराशौ चोरस्य पितुर्नामाक्षरं भवति । ततस्तत्केन्द्रबलक्रमादन्येषां नामाक्षराश्च ग्राह्याः । एवं भ्रातृपुत्रकळत्रादिषु ज्ञेया इत्यर्थः ॥९॥

---

१ 'रि' ट. २ 'वर्गश्छिन्त्यो' ख. ३ 'न्द्रेष्वेवं कृ' क, ख, ङ, न, फ.
४ 'पूर्वेणाक्षरेण ना' ख.

## द्वात्रिंशोऽध्यायः ।

अर्थानति[१]प्रकीर्णान् होराशास्त्रान्तरेभ्य उद्धृत्य ।
ग्रथित[२]मिदं परमार्थं होराशास्त्रं समासेन ॥१॥

इति[३] संक्षेपोऽशक्यो ज्ञातुं ह्यतिविस्तरो मतिं हन्ति ।
युक्त[४]प्रमाणयुक्त्या कृतमिदमुभयं परित्यज्य ॥२॥

दातव्यमपापेभ्यो निपुणमतिभ्यः प्रशान्तशीलेभ्यः[५] ।
शुभदिवसे गुरुलग्ने चन्द्रे मृदुदीर्घवर्गस्थे* ॥३॥

---

होराशास्त्रेभ्य अतिप्रकीर्णानर्थानवश्यान् प्रधानान् गृहीत्वा इदं शास्त्रं समासेन रचितमित्यर्थः ॥१॥



इतिः परिसमाप्तौ । संक्षेपं शास्त्रम् । यद्यतिविस्तरं स्याद् दुर्धियां मतिं हन्ति । युक्तप्रमाणयुक्त्या व्यवहारक्षमं कृतम् । उभयमतिलघुतामतिगुरुतां च त्यक्त्वा आचार्येण सुरचितमिति ॥२॥

अपापेभ्यः शिष्येभ्यः निपुणबुद्धिभ्यः प्रशान्तशीलेभ्य इदं शास्त्रमवश्यं दातव्यम् । साधुवृत्तेभ्य इत्यर्थः । शुभदिवसे सुमुहूर्ते गुरूदये चन्द्रे बुधांशकस्थे तत्र प्रारभ्यत इदमिति ॥३॥

---

१ 'रातन्त्रान्त' क, ट. २ 'मिदमनपशब्दं हो' ख, ग, ङ, ठ, द, ध, न, प, फ; 'मिदमनवशब्दं हो' घ, च, ट. ३ 'अति' ख, ग, ट, ठ, द, ध, प. ४ 'क्तं प्र' ख, घ, ङ, च, न, फ. ५ 'न्तचित्तेभ्यः' ट.

---

* एतदनन्तरं ठदधपाठेषु 'अष्टाङ्गनिमित्तानां प्रभवमधीष्यन् जिनेन्द्रमुखनिसृतम् ।
सिद्धान्तमार्हतादीन् गुरूंश्च चैत्यालयान् क्रमशः ॥'
इति पद्यं विद्यते । गपाठे तु 'विधिवदि'ति पञ्चमपद्यानन्तरमिदं पद्यं वर्तते ।

बलिहोमगन्धपुष्पैरादित्यादीन् ग्रहान् समभ्यर्च्य ।
प्रारभ्यमिदं शास्त्रं विधिवत्कृत्वा गुरोः पूजाम्£ ॥४॥

विधिवन्मन्त्राः पठिता भवन्ति सर्वार्थसाधका लोके ।
एवं सफलं शास्त्रं भवति हि विधिपूर्वकं पठितम् ॥५॥

सर्वस्यादेशस्य तु लाभालाभादिकस्य पर्याप्तम् ।
*एवं सुगृहीतमिदं जनयति हि यशोऽर्थसंसिद्धिम् ॥६॥

व्याकरणादिष्वङ्गेष्वधिगततत्त्वस्य[1] दैवशास्त्रविदः ।
कृष्णस्य कृतिश्चिन्ताज्ञानं कृष्णीयमिति[2] नाम्ना[3] ॥७॥

---

आदित्यादिग्रहान् बलिहोमगन्धपुष्पादिभिः समभ्यर्च्य सम्पूज्य विधिवद् गुरोः पूजां कृत्वा इदं शास्त्रं प्रारभ्यते येन तेन सर्वार्थाः साध्यन्ते ॥४॥

यथा महामन्त्रा विधिवत्पठिता लोके सर्वार्थसाधका धर्मार्थकाममोक्षसाधका भवन्ति तथेदं शास्त्रं विधिपूर्वकं पठितं सफलं भवति हि । अन्यथा ह्यन्यथा भवति । तस्माद् ग्रहादिपूजा कर्तव्या ॥५॥

सर्वस्य लाभालाभादिकस्य जयाजयस्य[1] । इदं विधिवत्सुगृहीतं[2] सर्वं जनयति । यशोऽप्यर्थसिद्धिं च । तस्माद्यत्नात् ग्राह्यमित्यर्थः ॥६॥

व्याकरणादिशास्त्रेषु अङ्गशास्त्रेषु अधिगततत्त्वस्य विदिततत्त्वस्य दैवविदः

---

१ 'ष्वपि गततत्त्व' ख. २ 'ति पूज्यम्' ग, घ, ङ, च, ठ, ध, न, फ.
३ 'म्ना ॥ कृष्णीयं समाप्तम्' छ, ध, न, फ.

---

1 'पजयस्य' ख. 2 'वद् गृही' क.

---

£ 'जाम् ॥ इदं कृष्णीयशास्त्रं समाप्तम् ।' इतः परं बपाठो नास्ति ।
* पद्यार्धमिदं गठदपपाठेषु नास्ति ।

१ २
## इति कृष्णीयशास्त्रं समाप्तम् ।

सर्वलोकनमस्कृतस्य कृष्णाचार्यस्य कृतिः चिन्ताज्ञानमिदं शास्त्रं कृष्णीयमिति नाम्ना भवति[1] ।।७।।

१ 'ति कृष्णीयं समाप्तम्' क, म; 'ति कृष्णीयशास्त्रम्' ग. २ 'शास्त्रे विंशोऽध्यायः । सौम्येऽब्दे चाश्वियुजे मासे कृष्णे तृतीयायाम् । सौम्यदिने कन्यार्के कृष्णोऽभ्यलिखत्तु कृष्णाख्यम् ।।' ठ; 'शास्त्रे विंशोऽध्यायः । सौम्येऽब्दे माघसिते पक्षेऽर्कदिने द्वितीयायाम् । लिखितमिदं कृष्णीयं कृष्णाख्येन द्विजेन शङ्करप्रीत्यै' ।। द; 'शास्त्रे विंशोऽध्यायः ।' प.

1 'ति । व्याख्या कृष्णीयशास्त्रस्य लिखिता विष्णुना मया ।
तन्नाम्नि भक्तिरसकृद्भवत्वेव ममाचला ।।
अतुलेन इदं पुस्तकं लिखितम् ।' भ.

# APPENDIX I

## द्रेक्काणस्वरूपाणि

कट्यां सितवस्त्रवेष्टितः कृष्णः शक्त इवाभिरक्षितुम्
रौद्रं परशुं समुद्यतं धत्ते रक्तविलोचनः पुमान् ॥१॥

रक्ताम्बरा भूषणसक्तचित्ता कुम्भाकृतिर्वाजिमुखी तृषार्ता ।
एकेन पादेन च मेषमध्ये द्रेक्काणरूपं यवनोपदिष्टम् ॥२॥

क्रूरः कलाज्ञः कपिलः क्रियार्थी भग्नव्रतोऽभ्युद्यतदण्डहस्तः ।
रक्तानि वस्त्राणि बिभर्ति चण्डो मेषे तृतीयः कथितस्त्रिभागः ॥३॥

कुञ्चितलूनकचा घटदेहा दग्धपटा तृषिताशनचित्ता ।
आभरणान्यभिवाञ्छति नारी रूपमिदं प्रथमं वृषभस्य ॥४॥

क्षेत्रधान्यगृहधेनुकलाज्ञो लाङ्गले सशकटे कुशलश्च ।
स्कन्धमुद्वहति गोपतितुल्यः क्षुत्परोऽजवदनो मलवासाः ॥५॥



द्विपसमकायः पाण्डरदंष्ट्रः शरभसमाङ्घ्रिः पिङ्गलमूर्तिः ।
अविमृगलोमा व्याकुलचित्तो वृषभवनस्य प्रान्तगतोऽयम् ॥६॥

सूच्याश्रयं समभिवाञ्छति कर्म नारी
रूपान्विताभरणकार्यकृतादरा च ।
हीनप्रजोच्छ्रितभुजर्तुमती त्रिभाग-
माद्यं तृतीयभवनस्य वदन्ति तज्ज्ञाः ॥७॥

उद्यानसंस्थः कवची धनुष्मा-
ञ्छूरोऽस्त्रधारी गरुडाननश्च ।
क्रीडात्मजालङ्करणार्थचिन्तां
करोति मध्ये मिथुनस्य चायम् ॥८॥

भूषितो वरुणवद् बहुरत्नैर्बद्धतूणिकवचः सधनुष्कः ।
नृत्तवादितकलासु च विद्वान् काव्यकृन्मिथुनराश्यवसाने ॥९॥

पत्रमूलफलभृद् द्विपकायः कानने मलयगः शरभाङ्घ्रिः ।
क्रोडतुल्यवदनो हयकण्ठः कर्कटे प्रथमरूपमुशन्ति ।।१०।।

पद्मार्चिता मूर्धनि भोगियुक्ता स्त्री कर्कशारण्यगता विरौति ।
शाखां पलाशस्य समाश्रिता च मध्ये स्थिता कर्कटकस्य राशेः ।।११।।

भार्याभरणार्थमर्णवे नौस्थो गच्छति सर्पवेष्टितः ।
हैमैश्च विभूषणैर्युतश्चिपिटास्योऽन्त्यगतश्च कर्कटे ।।१२।।

शाल्मलेरुपरि गृध्रजम्बुकौ श्वा नरश्च मलिनाम्बरान्वितः ।
रौति मातृपितृविप्रयोजितः सिंहरूपमिदमाद्यमुच्यते ।।१३।।

हयाकृतिः पाण्डरमाल्यशेखरो
बिभर्ति कृष्णाजिनकम्बलं नरः ।
दुरासदः सिंह इवात्तकार्मुको
नताग्रनासो मृगनाथमध्यमः ।।१४।।

ऋक्षाननो वानरतुल्यचेष्टो बिभर्ति दण्डं फलमामिषं च ।
कूर्ची मनुष्यः कुटिलैश्च केशैर्मृगेश्वरस्यान्त्यगतस्त्रिभागः ।।१५।।

पुष्पप्रपूर्णेन घटेन कन्या मलप्रदिग्धाम्बरसंवृताङ्गी ।
वस्त्रार्थसंयोगमभीप्समाना गुरोः कुलं वाञ्छति कन्यकाद्यः ।।१६।।

पुरुषः प्रगृहीतलेखनः श्यामो वस्त्रशिरा व्ययायकृत् ।
विपुलं च बिभर्ति कार्मुकं रोमव्याप्ततनुश्च मध्यमः ।।१७।।

गौरी सुधौतार्द्रदुकूलयुक्ता समुच्छ्रिता कुम्भकटच्छुहस्ता ।
देवालयं स्त्री प्रयता प्रवृत्ता वदन्ति कन्यान्तगतस्त्रिभागः ।।१८।।

वीथ्यन्तरापणगतः पुरुषस्तुलावा-
न्नुन्मानमानकुशलः प्रतिमानहस्तः ।
भाण्डं विचिन्तयति कस्य विपण्यमेत-
द्रूपं वदन्ति यवनाः प्रथमं तुलायाः ।।१९।।

कलशं परिगृह्य विनिष्पतितुं
समभीप्सति गृध्रमुखः पुरुषः ।
क्षुधितस्तृषितश्च कलत्रसुतान्
मनसैति तुलाधरमध्यगतः ॥२०॥

विभीषयंस्तिष्ठति रत्नचित्रितो
वने मृगान् काञ्चनतूणवर्मभृत् ।
धनुर्धरः किन्नररूपभृन्नर-
स्तुलावसाने यवनैरुदाहृतः ॥२१॥

वस्त्रैर्विहीनाभरणैश्च नारी महासमुद्रात्समुपैति कूलम् ।
स्थानच्युता सर्पनिबद्धपादा मनोरमा वृश्चिकराशिपूर्वः ॥२२॥

स्थानसुखान्यभिवाञ्छति नारी भर्तृकृते भुजगावृतदेहा ।
कच्छपकुम्भसमानशरीरा वृश्चिकमध्यमरूपमुशन्ति ॥२२॥

पृथुलचिपिटकूर्मतुल्यवक्त्रः
श्वमृगश्रृगालवराहभीषकारी ।
अवति च मलयाचलप्रदेशं
मृगपतिरन्त्यगतश्च वृश्चिकस्य ॥२४॥

मनुष्यवक्त्रोऽश्वसमानकायो धनुर्विकृष्यायतमाश्रमस्थः ।
क्रतूपयोग्यानि तपस्विनश्च रक्षत्यथाद्यो धनुषस्त्रिभागः ॥२५॥

मनोरमा चम्पकहेमवर्णा भद्रासने तिष्ठति भद्ररूपा ।
समुद्ररत्नानि विघट्टयन्ती मध्यत्रिभागो धनुषः प्रविष्टः ॥२६॥

कूर्ची नरो हाटकचम्पकाभो वरासने दण्डधरो निषण्णः ।
कौशेयकान्युद्वहतेऽजिनञ्च तृतीयरूपं नवमस्य राशेः ॥२७॥

रोमचितो मकरोपमदंष्ट्रः सूकरकायसमानशरीरः ।
योक्त्रकजालकबन्धनधारी रौद्रमुखो मकरे प्रथमस्तु ॥२८॥

कलास्वभिज्ञाब्जदलायताक्षी श्यामा विचित्राणि च मार्गमाणा ।
विभूषणालङ्कृतलोहकर्णा योषित् प्रदिष्टा मकरस्य मध्ये ॥२९॥

किन्नरोपमतनुः सकम्बलस्तूणचापकवचैः समन्वितः ।
कुम्भमुद्वहति रत्नचित्रितं स्कन्धगं मकरराशिपश्चिमः ॥३०॥

स्नेहमद्यजलभोजनामिषव्याकुलीकृतमनाः सकम्बलः ।
कौशिकेय (?) वसनोऽजिनान्वितो गृध्रतुल्यवदनो घटादिजः ॥३१॥

दग्धे शकटे सशाल्मलौ लोहान्याहरतेऽङ्गना वने ।
मलिनेन पटेन संवृता भाण्डैर्मूर्ध्नि गतैश्च मध्यमः ॥३२॥

श्यामः सरोमश्रवणः किरीटी त्वक्पत्रनिर्यासफलैर्बिभर्ति ।
भाण्डानि लोहव्यतिमिश्रितानि सञ्चारयत्यन्त्यगतो घटस्य ॥३३॥

स्रुग्भाण्डमुक्तामणिशङ्खमिश्रव्याक्षिप्तहस्तः सविभूषणश्च ।
भार्याविभूषार्थमपां निधानं नावा प्लवत्यादिगतो झषस्य ॥३४॥

अत्युच्छ्रितध्वजपताकमुपैति पोतं
कूलं प्रयाति जलधेः परिवारयुक्ता ।
वर्णेन चम्पकमुखा प्रमदा त्रिभागो
मीनस्य चैष कथितो मुनिभिस्त्रिभागः ॥३५॥

श्वभ्रान्तिके सर्पविवेष्टिताङ्गो
वस्त्रैर्विहीनः पुरुषस्त्वटव्याम् ।
चोरानलव्याकुलितान्तरात्मा
विक्रोशते (?) न्त्योपगतो झषस्या ॥३६॥

———

# APPENDIX II

## श्लोकानुक्रमणिका

# ERRATA

## शुद्धिपत्रम्

| अशुद्धम् | — शुद्धम् | पुटम्–पङ्क्तिः |
|---|---|---|
| व्याख्यातृः | = व्याख्यातुः | १–१० |
| पुरुषोऽङ्गनाचर | = पुरुषोऽङ्गना चर | ४– १ |
| तद्वन्नास्तिकस्या | = तद्वन्नास्तिकस्य, | ५–१० |
| भ्रातृन् | = भ्रातॄन् | ६–२१ |
| ” | = ” | ,,–१४ |
| ” | = ” | ,,–२२ |
| ज्ञायते | = न ज्ञायते | ८– ५ |
| वामभागस्थाःउ | =वामभागस्थाः। उ | ,,–१२ |
| चतुर्दिक्ष | = चतुर्दिक्षु | १७–१३ |
| प्रष्टारूढ | = प्रष्ट्रारूढ | १८–६ |
| चरक्रो | = चरचक्रो | ,,–११ |
| मुष्टचदयो | = मुष्टचादयो | १९–१३ |
| इन्द्रगुरो, | = इन्द्रगुरोः | २२–७ |
| सन्ययोर्ब | = सन्ध्ययोर्ब | २७–,, |
| स्वादिक्स्था | = स्वदिक्स्थाः | ३७–४ |
| (ह्यन्ते? ह्योते) | = (ह्यन्ते? ह्यते) | ५०–,, |
| शोषैः | = शेषैः | ,,–११ |
| पत्पञ्चमादयः | = तत्पञ्चमादयः | ५२–१२ |
| तञ्चमराशिमारू | = पञ्चमराशिमारू | ,,–१३ |
| ज्ञयः | = ज्ञेयः | ,,–१७ |
| ऋतुर्जातव्यः | = ऋतुर्ज्ञातव्यः | ५४–१५ |
| राशिन | = राशिना | ६०– ,, |
| द्रेक्काणासम | = द्रेक्काणसम | ६८– ७ |
| सन्निपाश्रयिणः | =समीपाश्रयिणः | ८०–१८ |
| मधुरफला(श्र? नि च)भ | = मधुरफलाश्र भ | ८१–८ |
| प्रष्ट रूढ | = प्रष्ट्रारूढ | ८९– ९ |
| द्विप्राद्राशि | = द्विपाद्राशि | १०३–१२ |
| गृह[illegible]सुखवत्वं | =गृहस्यासुखवत्त्वं | ११४-२० |
| चकरे | = चकारे | १२०– ७ |
| परिवर्तन | = परिवर्तनं | १२२– २ |
| शत्रुक्षेशांशे | = शत्रुक्षेत्रांशे | १५७ १३ |
| स्वांक्षेत्र | = स्वांशक्षेत्र | ,,–२१ |
| कत्तृणि | = कर्तॄणि | १६८–१७ |
| यावसंख्या | = यावत्संख्या | १७६– ,, |